रम्भया रम्भाभ्याम् रम्भाभि । अवसु ।

**इवन्ति यैयास्यास्याम्** ॥ २ ४ ॥ मद्यापा परापि अवन्ति पचनानि यै याम् यास् याम् भवन्ति यथासख्यम् । रम्भायै रम्भाभ्याम् रम्भाभ्य । रम्भाया रम्भाभ्याम् रम्भाभ्यः । रम्भायाः रम्भयो रम्भाणाम । रम्भायाम् रम्भयो र माम्रु । एव शाला माला दोला भार्या कान्ता अङ्गना वनिता जाया माया प्रभृतय । सर्वनाम्न-स्त्रिलिङ्गत्वात्स्त्रीलिङ्गे ।

**स्त्रियामादा** ॥ २१४ ॥ स्त्रियां वर्तमानादकारान्तात्सर्वनाम्नो भवति विभक्तिपरे । सर्वा सर्वे सर्वा । हे सर्वे हे सर्वे हे सर्वा । सर्वाम् सर्वे सर्वा । सर्वया सर्वाभ्याम् सर्वाभि । अवसु ।

**सर्वनाम्नस्तु ससवो ह्रस्वपूर्वाश्च** ॥ २१६ ॥ सर्वनाम्न. मद्यापा परापि अवन्ति वचनानि यै यास् यास् याम भवन्ति यथासख्य स्व सुना ह्रस्वपूर्वाश्च । सर्वस्यै सर्वाभ्याम् सर्वाभ्यः । सर्वस्या सर्वाभ्याम् सर्वाभ्य । सर्वस्या सर्वयो । साम्रि । सुराणि सर्वेत । सर्वासाम् । सर्वस्याम् सर्वयोः सर्वासु । एव विश्वादीनामेक-शब्दपर्यन्तानां रूप ज्ञेयम् । अस्यादीनान्तु सन्यानां रम्भाशब्दवत् । अस्य मध्य चरम तय अय कतिपय अय एत सप्त ॥ द्वितीयादाम्बस्व तु भव । द्वितीया द्वितीये द्वितीया । हे द्वितीये हे द्वितीये हे द्वितीया: । द्वितीयाम् द्वितीये द्वितीया । द्वितीयया द्वितीयाभ्याम् द्वितीयाभि । अवसु ।

**द्वितीयातृतीयाभ्यां वा** ॥ २१७ ॥ द्वितीयातृतीयाभ्यां परापि अवन्ति वचनानि यै याम याम् याम् भवन्ति यथासख्य

एतासामपि च पूर्ववत् । स्वस्रादयः के ?

श्लोकः ।

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैते स्वस्रादिगणगोचराः ॥ १ ॥

शेषाणां मातृशब्दवत् । इति ऋकारान्ताः ॥ ॠकार लृकार ॡकार एकारान्ता अप्रसिद्धाः । ऐकारान्तः स्त्रीलिङ्गो सुरैशब्दः । स च रैशब्दवत् । सुराः सुरायौ सुरायः । सम्बोधनेऽपि तद्वत् । सुरायम् सुरायौ सुरायः । सुराया सुराभ्यां सुराभिः । सुराये सुराभ्याम् सुराभ्यः । सुरायः सुराभ्याम् सुराभ्यः । सुरायः सुरायोः सुरायाम् । सुरायि सुरायोः सुरासु । इत्यैकारान्ताः । ओकारान्तः स्त्रीलिङ्गो गोशब्दः । स च पूर्ववत् । औकारान्तः स्त्रीलिङ्गो नौशब्दः । स च ग्लौशब्दवत् । इत्यौकारान्ताः ।

इति स्वरान्ताः स्त्रीलिङ्गाः ।

---

## अथ स्वरान्ता नपुंसकलिङ्गा उच्यन्ते ।

अकारान्तो नपुंसकलिङ्गः कुण्डशब्दः । सौ ।

अकारादसम्बुद्धौ मुश्च ॥ २२६ ॥ अकारान्तान्नपुंसकलिङ्गात् परयोः स्यमोर्मकारो भवति असम्बुद्धौ । कुण्डं ।

औरीम् ॥२२७॥ नपुंसकलिङ्गात्परः औरीम् भवति । कुण्डे ।

जश्शसौ नपुंसके ॥ २२८ ॥ जश्शसौ नपुंसकलिङ्गे शिसंज्ञौ भवतः ।

स्यो ह्रस्वो भवति । स्वमस्य सोमप सोमपानि । हे सोमप हे सोमपे हे सोमपानि । पुनरपि । सोमप सोमपे सोमपानि । शेषं पुंलिङ्गवत् । इत्याकारान्ताः । इकारान्तो नपुंसकलिङ्गो वारिशब्दः । सि ।

नपुंसकात्स्यमोर्लोपो न च तदुक्तम् ॥ २४५ ॥ नपुंसकात्परयोः स्यमोर्लोपो भवति तदुक्तं कार्यं न भवति । वारि ।

नामिनः स्वरे ॥२४६॥ नाम्यन्तान्नपुंसकलिङ्गात् नुरागमो भवति स्वरे परे । औरीमिति ईत्यस्य बाधः । वारिणी । अमि पूर्ववत् । नुरागम । सामान्यविशेषयोर्विशेषो विधिर्बलवान् इति न्यायात् । उक्तञ्च ।

श्लोकः ।

सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत् ।
परेण पूर्वबाधो वा प्रायशो दृश्यतामिह ॥ १ ॥

सुट् स्वरात्पुंसि तु इत्यनेन सूत्रेण नुरागमो भवतीत्यर्थः ॥

इन्हन्पूषार्यम्णां शौ च ॥ २४७ ॥ इन् हन् पूषन् अर्यमन् इत्येतेषामुपधाया दीर्घो भवति । नपुंसकलिङ्गे जसशसोरादेशे शौ चासम्बुद्धौ सौ च परे । वारीणि ।

नाम्यन्तस्यातुरो वा ॥ २४८ ॥ नाम्यन्तस्य नपुंसकलिङ्गस्य पुंवद्भावस्य च यदुक्तं कार्यं तदुक्तं वा भवति । सम्बुद्धौ परे । प्रत्ययलोपे प्रत्ययलक्षणं न भवति इति न्यायात् । हे वारि हे वारे हे वारिणी हे वारीणि । पुनरपि वारि वारिणी वारीणि । वारिणा वारिभ्याम् वारिभिः । वारिणे वारिभ्याम् वारिभ्यः । वारिण इत्यादि । भानि । नामिनः स्वरे प्राप्ते सति सामान्यविशेषयोर्विशेषो

विधिर्बलवान् इतिन्यायात् वारि च गुरिति गुणागमो भवति । दीर्घ
मामिसनौ । वारिणाम् । वारिणि वारिणोः वारिषु ॥ अस्थि दधि
सक्थि अक्षिशब्दानां प्रथमाद्वितीययोर्वारिशब्दवत् । अस्थि अस्थिनी
अस्थीनि । पुनरपि अस्थि अस्थिनी अस्थीनि । टादौ—

अस्थिदधिसक्थ्यक्ष्णामनन्तष्टादौ ॥ २४६ ॥ नपुंसक-
लिङ्गानामस्थ्यादीनामन्तोऽन् भवति टादौ स्वरे परे ।

अवमसंयोगादनोऽलोपोऽलुप्तवच्च पूर्वविधौ ॥२५० ॥
अवमसंयोगात्परस्य अनोऽकारस्य लोपो भवति अघुटि स्वरे परे
स चालुप्तवद्भवति पूर्वस्य वर्णस्य विधौ कर्तव्ये । अस्थ्ना अस्थिभ्याम्
अस्थिभिः । अस्थ्ने अस्थिभ्याम् अस्थिभ्यः । अस्थ्नः अस्थिभ्याम्
अस्थिभ्यः । अस्थ्नः अस्थ्नोः अस्थ्नाम् ।

ईङ्योर्वा ॥ २५१ ॥ अवमसंयोगात्परस्य अनोऽकारस्य
लोपो भवति वा ईङ्योः अघु स्वरयोः औकारादेशे ईकारे सप्तम्येक-
वचने परतः स चालुप्तवद्भवति पूर्वस्य वर्णस्य विधौ कर्तव्ये ।
अस्थ्नि अस्थनि अस्थ्नोः अस्थिषु । एवं दधि सक्थि अक्षिशब्दाः ।
शुचिशब्दस्य प्रथमाद्वितीययोर्वारिशब्दवत् । शुचि शुचिनी शुचीनि ।
सम्बुद्धावविशेषः । पुनरपि शुचि शुचिनी शुचीनि ।

टादौ भाषितपुंस्कं पुंवद्वा ॥ २५२ ॥ भाषितपुंस्कं भाषित-
पुंस्कं नपुंसकलिङ्गं टादौ स्वरे वा पुंवद्भवति ।

श्लोकः ।

यन्निमित्तमुपादाय पुंसि लिङ्गे प्रवर्तते ।
क्लीबवृत्तौ तदेव स्यात्तद्धि भाषितपुंस्कम् ॥ १ ॥

शुचि भूमिगतं तोयं शुचिर्नारी पतिव्रता ।
शुचिर्धर्मपरो राजा ब्रह्मचारी सदा शुचिः ॥ २ ॥

शुच्या शुचिना शुचिभ्यां शुचिभिः । शुचिने शुचये शुचिभ्याम् शुचिभ्यः । इत्यादि ॥ द्विशब्दस्य तु भेदः । त्रयाणाम् त्रीणीभिरिति इत्य च । द्वे । हे द्वे । द्वे । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः । त्रिशब्दस्य चतुराशब्दोर्वारिशब्दवत् । त्रीणि । त्रीणि । त्रिभिः । अन्यत्र पुंलिङ्गवत् । इति इकारान्ताः । ईकारान्तो नपुंसकलिङ्गो ग्रामणीशब्दः । तस्य स्वरो ह्रस्वो नपुंसके इति ह्रस्वत्वे शुचिशब्दवत् । टादौ भाषितपुंस्कं पुंवद्वा भवति विकल्पेन । ग्रामणि ग्रामणिनी ग्रामणीनि । पुनरपि ग्रामणि ग्रामणिनी ग्रामणीनि । ग्रामणिना । अनेकाक्षरयोस्त्वसंयोगाद्यवौ इति यत्वम् । ग्रामण्या ग्रामणिभ्याम् ग्रामणिभिः । ग्रामणिने ग्रामणिभ्याम् । ग्रामणिभ्यः । इत्यादि । आमि नुडागमः । दीर्घमामि सनौ इति दीर्घः । ग्रामणीनाम् । पुंवद्भावे । ग्रामण्याम् । ग्रामणिनि । पुंलिङ्गे । नियो ङिराम् इति आम् । अन्यत् पूर्ववत् । ग्रामण्याम् ग्रामणिनोः ग्रामण्योः ग्रामणिषु । सम्बोधने । नाम्यन्तयतुरां वा । हे ग्रामणिनी हे ग्रामणि हे ग्रामणीनि । एवमग्रणी सेनानी प्रभृतयः ॥ इति ईकारान्ताः । उकारान्तो नपुंसकलिङ्गो वस्तुशब्दः । स च वारिशब्दवत् । वस्तु वस्तुनी वस्तूनि । सम्बोधने । हे वस्तु हे वस्तो हे वस्तुनी हे वस्तूनि । पुनरपि । टादौ स्वरे परे निरन्तनपुंसके । आमि परे । आमि च नुः । दीर्घमामि सनौ इति दीर्घः । वस्तूनाम् । वस्तुनि वस्तुनोः वस्तुषु । मधुशब्दस्य प्रथमाद्वितीययोर्वारिशब्दवत् । मधु मधुनी मधूनि । पुनरपि । टादौ स्वरे परे भाषितपुंस्कं पुंवद्वा इति विकल्पेन ।

पिन्दं च मा भवति विराम व्यञ्जनादौ च ।

परान्त ङुणं प्रथमः ॥ २५६ ॥ परान्त वर्तमानानां ङुणां वर्गाणां प्रथमा भवन्ति । अघाष प्रथम इत्यनुवर्तते ।

वा विरामे ॥२५७॥ विराम ङुणां प्रथमस्तृतीयो वा भव ति । सुगण् सुगण् सुगाणौ सुगाणः ५२ । सम्बुद्धौ । सुगाणं सुगाणौ सुगाणः । सुगाणा सुगाण्भ्यां सुगाण्भिः । सुगाणे सुगाण्भ्यां सुगाण्भ्यः । सुगाणः सुगाण्भ्यां सुगाण्भ्यः । सुगाणः सुगाणोः सुगाणां । सुगाणि सुगाणोः । सुणि । गत्व ।

अघोषे प्रथम ॥२५८॥ अघाष परे ङुणां प्रथमो भवति । इति गत्व । भामि परेत्यादिना सत्व मत्व ।

ङणपोगेवा ॥ २५९ ॥ ङणसप्रपोगेगि वो भवति । सुगाण्सु ।

ङणमर्थप्रथमः शषसेषु द्वितीयो वा ॥ २६० ॥ ङणो प्रथमस्य द्वितीयो भवति शषसेषु परतो वा सुगाण्सु । मत्वात् शत्वस्तु भेद । चवर्गादगमीनां चत्वत्र चवर्गापदवस्यापवा_युत्_ई_वां मा रोप गत्व ।

मनोरनुस्वारो धुटि ॥ २६१ ॥ मनस्सम्बोर्मकारनकारस्यो रनुस्वारो भवति धुटि परे ।

वर्गे वर्गान्वा ॥२६२॥ [illegible] अनुस्वारे वर्गे परे वर्गान्तो भ[illegible]

संयोगान्तस्य लो[illegible] ॥ संयोगान्तस्य लोप [illegible] ति विरामे व्यञ्जनादौ [illegible] मत्वाः ।

मत्वाडी [illegible]

वौ च मघवान्मघवा वा ॥ २०० ॥ विभक्तौ सौ च परे मघवन् शब्दो मघवान् भवति वा ॥ अन्त्यस्योत्वे दीर्घे प्राप्ते निपातनाद्दीर्घः । मघवान् मघवन्तौ मघवन्तः । मघोपनेऽपि तद्वत् । मघवन्तं मघवन्तौ मघवतः । मघवता मघवद्भ्यां मघवद्भिः । इत्यादि । पक्षे । मघवा मघवानौ मघवानः । मघवानं मघवानौ मघोनः । मघोना मघवभ्यां मघवभिः । इत्यादि । भानमाचष्टे । तत्करोति तदाचष्टे इन् । इनि लिङ्गस्यानेकाक्षरस्येत्यादिना अन्त्यस्वरादेर्लोपे प्राप्ते ।

न युनः ॥ २०१ ॥ अत्र इत्यस्य अन्त्यस्वरादेर्लोपो न भवति इनि परे स्थानवत् । मघवानमाचष्टे मघवयति ।

स्थूलदूरयुवक्षिप्रक्षुद्राणाम् अन्त्यादेर्लोपो गुणश्च नामिनाम् ॥ २०२ ॥ स्थूलदूरयुवक्षिप्रक्षुद्र इत्येतेषामन्त्यस्वरादेर्लोपो भवति नामिनां गुणश्च इनि परे । स्थूलमाचष्टे स्थवयति । दूरमाचष्टे दवयति । युवानमाचष्टे यवयति । क्षिप्रमाचष्टे क्षेपयति । क्षुद्रमाचष्टे क्षोदयति । इनि लिङ्गस्यानेकाक्षरस्येत्यादिना अन्त्यस्वरादेर्लोपः । इनि च विकरणो गुणः सर्वत्र ॥ पञ्चन् शब्दस्य तु भेदः । तस्य बहुवचनमेव । कतेश्च जसशसोर्लुक् । पञ्च । पञ्च । पञ्चभिः । पञ्चभ्यः । पञ्चभ्यः । आमि च नुरित्युच्यते ।

संख्याया ष्णान्तायाः ॥ २०३ ॥ षकारनकारान्ताया संख्याया नुरागमो भवति आमि परे । दीर्घमामि सनौ इति अनुवर्तते ।

नान्तस्य चोपधायाः ॥ २०४ ॥ नान्तस्य चोपधाया

दीर्घो भवति सनामि परे । पञ्चानाम् । पञ्चसु । एवं सप्तन् नवन् दशन् प्रभृतय ॥ अष्टन्शब्दस्य तु भेदः । तस्यापि बहुवचनमेव ।

अष्टनः सर्वासु ॥ २०५ ॥ अष्टन्शब्दान्तस्य आ भवति सर्वासु विभक्तिषु । येन विधिस्तदन्तस्य इति नकारस्य आकारः । सवर्णे दीर्घः ।

औ तस्माज्जश्शसोः ॥ २०६ ॥ तस्मादष्टन् कृताकारात् परयोर्जश्शसोः स्थाने और्भवति । अष्टौ । अष्टौ । तस्मादिति ग्रहणं किमर्थम् । आत्वस्यानित्यार्थं । तेन औत्वाभावे जश्शसोर्लुक् इत्यनेन जश्शसोर्लोपः । अष्ट । अष्ट । अष्टाभिः अष्टभिः । अष्टाभ्यः अष्टभ्यः । अष्टाभ्यः अष्टभ्यः । आमि आत्वं संख्यायाः ष्णान्ताया इति अत्र अन्तग्रहणाविधानात् । भूतपूर्वनान्ताया अपि आमि नुडागम । अष्टानाम् । अष्टासु अष्टसु । इति नकारान्ताः ॥ पकारान्तः अप्रसिद्धः । मकारान्तः पुंलिङ्गः किम् शब्दः ।

किमः कः ॥ २०७ ॥ किमः को भवति विभक्तौ परतः । कः कौ के । कं कौ कान् । केन काभ्यां कैः । इत्यादि । इदम् शब्दस्य तु भेदः ।

इदमियमयं पुंसि ॥ २०८ ॥ इदम्शब्दस्य इयं भवति स्त्रियामयं च पुंसि इदं नपुंसके सौ परे । अयम् । अन्यत्र त्यदाद्यत्वम् ।

दोऽद्रे मः ॥ २०९ ॥ त्यदादीनां दकारस्य मो भवति अद्रे विभक्तौ । इमौ इमे । इमं इमौ इमान् ।

टौसोरनः ॥ २१० ॥ अगुणविभक्तिकस्य इदम्शब्दस्य अनादेशो भवति टौसोः परतः । अनेन ।

व्यञ्जने परे। सुपुर्भ्यां सुपुर्भिः। इत्यादि। इति पकारान्तः॥ शकारान्तः पुल्लिङ्गो विश् शब्दः। दशपञ्चान्ते इत्यादिना टत्वम्। विट् विड् विशौ विशः। सम्बोधनेऽपि तद्वत् इत्यादि। तादृश् शब्दस्य तु भेदः। त्यदादीनां दृशि आत्वम्। तादृक् तादृग् तादृशौ तादृशः। एवं सदृश् यादृश् एतादृश् कीदृश् ईदृश् अमूदृश् प्रभृतयः। इति शकारान्ताः॥ षकारान्तः पुल्लिङ्गो रत्नमुष् शब्दः। रत्नमुट् रत्नमुड् रत्नमुषौ रत्नमुषः। रत्नमुषं रत्नमुषौ रत्नमुषः। रत्नमुषा रत्नमुड्भ्यां रत्नमुड्भिः इत्यादि। साधुतक्ष् शब्दस्य तु भेदः।

संयोगादेर्धुटः ॥ २२० ॥ संयोगादेर्धुटो लोपो भवति विरामे व्यञ्जनादौ च। व्यञ्जनाच्च सलोपः।

दशपञ्चान्तेभ्रादीनां डः ॥२२१॥ दशपञ्चान्तव्यञ्जनानां भ्रस्जादीनां च डो भवति विरामे व्यञ्जनादौ च। इति डत्वं साधुतट् साधुतड् साधुतक्षौ साधुतक्षः। सम्बोधनेऽपि तद्वत्। साधुतक्षं साधुतक्षौ साधुतक्षः। साधुतक्षा साधुतड्भ्यां साधुतड्भिः इत्यादि। षष्शब्दस्य तु भेदः। तस्य बहुवचनमेव। अष्टासंख्ये च। षट् षड् षड्भिः। षड्भ्यः। आमि नुरागमो णत्वं च।

षडो णो ने ॥२२२॥ संख्यायाः ष्णान्तायाः षडो णो भवति विभक्तौ ने परे। षण्णां षट्सु षट्सु इत्यादि॥ सकारान्तः पुल्लिङ्गः सुमनस् शब्दः। सौ। अन्त्वसन्तस्येत्यादिना दीर्घः। सुमनाः सुमनसौ सुमनसः। हे सुमनः हे सुमनसौ हे सुमनसः। सुमनसं सुमनसौ सुमनसः। सुमनसा सुमनोभ्यां सुमनोभिः। इत्यादि। एवं चन्द्रमस्। पिण्डग्रासस्। स्वर्णसारस्। हिरण्यरेतस्। सुमानस्।

अनड्वान्सु । इत्यादि । अनडुह् शब्दस्य तु भेदः सः ।

मो नु ॥ ३४० ॥ अनडुहो ऽन्तस्य नुरागमो भवति घौ परे । अनड्वान् अनड्वाहौ अनड्वाहः ।

सम्बुद्धावुभयोर्ह्रस्वः ॥ ३४१ ॥ चतुरनडुहोरुभयोः सम्बुद्धौ ह्रस्वो भवति । हे अनड्वन् । अनड्वाहं अनड्वाहौ ।

अनडुहश्च ॥ ३४२ ॥ अनडुह् इत्येतस्य वाऽन्तस्योऽन्तो भवति अघुट् स्वरे परे व्यञ्जने च परे । अनडुहः । अनडुहा । विराम व्यञ्जनेत्यादिना दत्वं । अनडुद्भ्यां । अनडुद्भिः ॥ अनडुत्सु । इत्यादि इति हकारान्ताः ॥ प्रियाश्चत्वारो यस्यासौ प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः । हे प्रियचत्वः ३ । प्रियचत्वारं प्रियचत्वारौ प्रियचतुरः । प्रियचतुरा प्रियचतुर्भ्यां प्रियचतुर्भिः । इत्यादि ।

इति व्यञ्जनान्ताः पुंलिङ्गाः ।

---

## ॥ अथ व्यञ्जनान्ताः स्त्रीलिङ्गा उच्यन्ते ॥

कवर्गान्ताः स्त्रीलिङ्गा अप्रसिद्धाः । चकारान्तः स्त्रीलिङ्गस्त्वच् शब्दः । त्वक् त्वग् त्वचौ त्वचः । त्वचा । इत्यादि । एवं वाच् शब्द प्रभृतयः ॥ छकारान्तोऽप्रसिद्धः ॥ जकारान्तः स्त्रीलिङ्गः स्रज् शब्दः । स्रक् स्रग् स्रजौ स्रजः । स्रजा । इत्यादि । झञटवर्गान्ता अप्रसिद्धाः । तकारान्तः स्त्रीलिङ्गो विद्युत्शब्दः । विद्युत् । विद्युद् । विद्युतौ । इत्यादि ॥ थकारान्तोऽप्रसिद्धः ॥ दकारान्तः स्त्रीलिङ्गः । शरत् शरद् शरदौ शरदः । एवं समिद् निषद्

वा नपुंसके ॥ १४८ ॥ अभ्यस्तात्परोऽन्तिरनकारको वा
ति नपुंसकलिङ्गे घुटि परे। ददति ददन्ति । पुनरपि । ददत्
द् ददती ददति ददन्ति। ददता ददद्भ्यां ददद्भिः । इत्यादि।
रान्तोऽप्रसिद्धः। धकारान्तो नपुंसकलिङ्गस्तद् शब्दः। नपुंसका-
स्योर्लोपो न च तदुक्तमिति वचनात्। स्त्वादेशं न भवति । तत्
ते तानि। पुनरप्येवं। अन्यत्र पुल्लिङ्गवत् । एवं यद् शब्दः।
कारान्तोऽप्रसिद्धः। इत्यादि । नकारान्तो नपुंसकलिङ्गः सामन्
ब्दः। साम साम्नी सामनी सामानि । पूर्वकरणान्नपुंसकस्य
।। हे साम हे सामन हे साम्नी हे सामनी हे सामानि।
नरप्येवं। इत्यादि। एवं धर्मन् व्योमन् भूमन् प्रभृतयः।
र्मन् शब्दस्य तु भेदः। चर्म चर्मणी चर्माणि। अन्यत्र पुल्लिङ्गवत्।
वं वर्मन् कर्मन् शर्मन् प्रभृतयः । इत्यादि । अहन् शब्दस्य तु
दः। सौ।

अह्नः स ॥ १४९ ॥ अहन्नित्येतस्य नकारस्य सो भवति
विरामे व्यञ्जनादौ च। अहः। हे चोर्वा। अह्नी अहनी अहानि।
हे अहः रे। पुनरपि। अह्ना अहोभ्यां अहोभिः। अहःसु। इत्यादि।
पकारान्तोऽप्रसिद्धः। मकारान्तो नपुंसकलिङ्गः किम्शब्दः। किं
के कानि। अन्यत्र। पुल्लिङ्गवत्॥ इदं शब्दस्य तु भेदः। इदमियमयं
पुंसि।

इदं नपुंसकेऽपि च ॥१५॥ नपुंसकलिङ्गे स्यमि च परे
इदम् शब्दस्य इदमादेशो भवति । इदं इमे इमानि । इदं इमे
इमानि। पुनरप्येवं। इत्यादि ॥ यकारान्तोऽप्रसिद्धः । रकारान्तो

शाषिपु भवतः। अन्त्यलोपे सति।

अमौ माम् ॥२५५॥ युष्मदादिभ्यः पर अम औ च माम् भवति। मघ्वदीर्घ। युवां। आवां।

यूयं वयं जसि ॥ २५६ ॥ युष्मदस्मदो सविभक्त्योर्यू य वयमित्येतौ भवतः जसि परे। यूय। वय। साम्प्रदायिकत्वे इति त्वाम् माम। मत् मम् इति त्विके।

एषां विभक्तावन्तलोपः ॥ २५७ ॥ एषां युष्मदादीनां अन्तस्य लोपो भवति विभक्तौ परतः। भवर्धे दीर्घे। त्वां। मां। युवां आवां।

शान् शसः ॥ २५८ ॥ युष्मदादिभ्यः परस्य शसः आन् भवति। युष्मान। अस्मान।

एत्वमस्वानिनि ॥ २५९ ॥ युष्मदादीनामन्त्यस्य एत्व भवस्यानिनि अनादेशिनि मन्यय परे। त्वया। मया।

आत्वं व्यञ्जनादौ ॥ २६ ॥ युष्मदादीनामन्त्यस्य आत्व भवति व्यञ्जनादौ विभक्तौ आदेशवर्जित मन्यय परे। युवाभ्यां। आवाभ्यां। युष्माभि। अस्माभि।

तुभ्यं मह्य ङयि ॥२६१॥ युष्मदस्मदो सविभक्त्या तुभ्य मह्यमित्येतौ भवतः ङयि परे। तुभ्य मह्य। युवाभ्यां। आवाभ्यां।

भ्यसभ्यम् ॥ २६२ ॥ पञ्चम्या युष्मदादिभ्यः परो भ्यस् अभ्य भवति। युष्मभ्य। अस्मभ्य।

नपुंसकलिङ्गो भास् शब्दः । भाः भासी भासि । पुनरप्येवं । इत्यादि ॥ भस्मात् शब्दस्य तु भेदः । भस्मासा दिदः । भस्मानि । भस्मनि । इत्यादि ॥ अप्सरामप्यत्वा मर्त्यसिद्धा । पञ्चरात्रस्य पञ्चात्मस्य पूर्ववत् । समरान्तो यसु सर्वसिद्धो भरान् शब्दः । भरा भरासी । सान्तमहतोरित्यनेन दीर्घे । भरांसि । पुनरपि । भरासा भरोभ्यां भरोभिः । एवं नभस् श्रेयस् पयस् वयस् यशस् मनस्प्रभृतयः । इत्यादि ॥ सर्पिस् शब्दस्य तु भेदः । सर्पिः सर्पिषी सर्पींषि । पुनरप्येवं । सर्पिषा ।

इसुस्दोषां घोषवति रः ॥ १११ ॥ इसुस् दोष् इत्येतेषाम् अन्तो रो भवति घोषवति परे । सर्पिर्भ्यां सर्पिर्भिः । सर्पिषु सर्पिःषु । एवं धनुस् चक्षुस् यजुस्प्रभृतयः । इत्यादि । अहस् शब्दस्य तु भेदः । अहः अह्नी अहानि । पुनरप्येवं अन्यत्र पुंलिङ्गवत् ॥ इत्यादान्तोऽप्य सिद्धः । इत्यादि ॥

इति व्यञ्जनान्ता नपुंसकलिङ्गाः ।

---

## अथ व्यञ्जनान्तेष्वलिङ्गेषु युष्मदस्मदौ उच्येते ।

युष्मद्सि अस्मद्सि इति स्थिते ।

त्वन्मदोरेकत्वे ॥ ११२ ॥ एकत्वे वर्तमानयोर्युष्मदस्मदोः स्थाने त्वन्मदौ भवतः ।

त्वमहं सौ सविभक्त्योः ॥ ११३ ॥ युष्मदस्मदोः सविभक्त्योस्त्वमहमित्येतौ भवतः सौ परे । त्वं । अहं ।

युवावौ द्विवाचिषु ॥ ११४ ॥ युष्मदस्मदोः युवावौ द्वि

मो रक्षति । इति सिद्धं ॥ ग्राम युवयो स्वं । ग्राम आवयो स्वं । ग्रामा युवाभ्यां दीयते । ग्राम आवाभ्यां दीयते । ग्रामो युवां रक्षति । ग्राम आवां रक्षति । इति सिद्धे ।

वाम्नौ द्वित्वे ॥ २६७ ॥ पदात्पर युष्मदस्मदो पदं पष्ठी-चतुर्थीद्वितीयासु द्वित्वे निष्पन्नं वाम्नौ आपद्यते । यथासंख्य । ग्रामो वां स्वं । ग्रामा नौ स्वं । ग्रामो वां दीयते । ग्रामो नौ दीयते । ग्रामा वां रक्षति । ग्रामा नौ रक्षति ॥ ग्रामस्तव स्वं । ग्रामो मम स्वं । ग्रामस्तुभ्यं दीयते । ग्रामो मह्यं दीयते । ग्रामस्त्वां रक्षति । ग्रामो मां रक्षति । इति स्थिते ।

त्वन्मदोरेकत्वे तेमे त्वामा तु द्वितीयायां ॥ २६८ ॥ युष्मदस्मदोरेकत्वे त्वन्मदादेशयो पदं पदात्परं षष्ठीचतुर्थीद्वितीयासु एकत्वे निष्पन्नं ते मे आपद्यते त्वा मा तु द्वितीयायां । ग्रामस्ते स्वं । ग्रामो मे स्वं । ग्रामस्ते दीयते । ग्रामो मे दीयते । ग्रामस्त्वा रक्षति । ग्रामो मा रक्षति । इति सिद्धं ।

न पादादौ ॥ २६९ ॥ पादस्यादौ वर्तमानानां युष्मदादी-नां पदमेतान्यादेशान् नाप्नोति ।

यथा ।

वीरो विश्वेश्वरो देवो युष्माकं कुलदेवता ।
स एव नाथो भगवानस्माकं पापनाशन ॥ १ ॥
भगवानीश्वरो भूयाद्युष्माकं वरद प्रभुः ।
यथो निराकृता दूरमस्माकं येन विद्विष ॥ २ ॥

पादादाविति किं । पान्तु वः पार्वतीनाथप्रमुखप्रमथाधिप ।

श्लोकः ।

आदिलोपोऽन्त्यलोपश्च मध्यलोपस्तथैव च ॥
विभक्तिपदवर्णानां दृश्यते शार्ववर्मिके ॥ १ ॥

मद् पञ्चम्येकत्वे ॥ २६२ ॥ एभ्यो युष्मदादिभ्यः पञ्चम्येकत्वे वर्तमाना पञ्चम्यद् भवति । त्वत् । मत् । युवाभ्यां । आवाभ्यां । युष्मत् । अस्मत् ।

तव मम ङसि ॥ २६४ ॥ युष्मदस्मदोः सविभक्त्योस्तव मम इत्येतौ भवतो ङसि परे । तव मम । युवयोः । आवयोः ।

सामाकम् ॥ २६५ ॥ एभ्यो युष्मदादिभ्यः परः सामयुक्ताम् आकम् भवति । युष्माकं । अस्माकं । त्वयि मयि युवयोः आवयोः युष्मासु अस्मासु । एवं नीयते । त्वं युवां यूयं । त्वां युवां युष्मान् । त्वया युवाभ्यां युष्माभिः । तुभ्यं युवाभ्यां युष्मभ्यं । त्वत् युवाभ्यां युष्मत् । तव युवयोः युष्माकं । त्वयि युवयोः युष्मासु ॥ अहं आवां वयं । मां आवां अस्मान् । मया आवाभ्यां अस्माभिः । मह्यं आवाभ्यां अस्मभ्यं । मत् आवाभ्यां अस्मत् । मम आवयोः अस्माकं । मयि आवयोः अस्मासु ॥ ग्रामो युष्माकं । ग्रामोऽस्माकं । स ग्रामो युष्मभ्यं दीयते । ग्रामोऽस्मभ्यं दीयते । ग्रामो युष्मान् रक्षति । ग्रामोऽस्मान् रक्षति । इति स्थिते ।

युष्मदस्मदोः पदं पदात्षष्ठीचतुर्थीद्वितीयासु वस्नसौ ॥ २६६ ॥ पदात्परं युष्मदस्मदोः पदं षष्ठीचतुर्थीद्वितीयासु बहुत्वे नित्यं वस्नसावादेशौ यथासंख्यं । ग्रामो वः स्वं । ग्रामो नः स्वं । ग्रामो वो दीयते । ग्रामो नो दीयते । ग्रामो वो रक्षति । ग्रामो

मां रक्षति । इति सिद्धं ॥ ग्राम युवयोः स्वं । ग्राम आवयोः स्वं । ग्रामो युवाभ्यां दीयते । ग्राम आवाभ्यां दीयते । ग्रामो युवां रक्षति । ग्राम आवां रक्षति । इति स्थिते ।

वान्नौ द्वित्वे ॥ २६७ ॥ पदात्परं युष्मदस्मदो पदं षष्ठी-चतुर्थीद्वितीयासु द्वित्वे निष्पन्नं वान्नौ आपद्यते । यथासंख्यं । ग्रामो वां स्वं । ग्रामो नौ स्वं । ग्रामो वां दीयते । ग्रामो नौ दीयते । ग्रामो वां रक्षति । ग्रामो नौ रक्षति ॥ ग्रामस्तव स्वं । ग्रामो मम स्वं । ग्रामस्तुभ्यं दीयते । ग्रामो मह्यं दीयते । ग्रामस्त्वां रक्षति । ग्रामो मां रक्षति । इति स्थिते ।

त्वन्मदोरेकत्वे तेमे त्वामा तु द्वितीयायां ॥ २६८ ॥ युष्मदस्मदोरेकत्वे त्वन्मदीभूतयोः पदं पदात्परं षष्ठीचतुर्थीद्वितीयासु एकत्वे निष्पन्नं ते मे आपद्यते त्वा मा तु द्वितीयायां । ग्रामस्ते स्वं । ग्रामो मे स्वं । ग्रामस्ते दीयते । ग्रामो मे दीयते । ग्रामस्त्वा रक्षति । ग्रामो मा रक्षति । इति सिद्धं ।

न पादादौ ॥ २६९ ॥ पादस्यादौ वर्तमानानां युष्मदादी-नां पदमेते वान्नावादयश्च न भवन्ति ।

श्लोकः ।

वीरो विश्वेश्वरो देवो युष्माकं कुलदेवता ।
स एव नाथो भगवानस्माकं पापनाशनः ॥ १ ॥
भगवानीश्वरो भूयाद्युष्माकं वरदः प्रभुः ।
सद्यो निराकृता दूरमस्माकं येन विद्विषः ॥ २ ॥

पादादाविति किं । पान्तु वः पार्वतीनाथमीशस्मरारयः ।

आमन्त्रणात् ॥ १७० ॥ आमन्त्रणात्परं युष्मदादीनां पदमेतान्यादेशान्न प्राप्नोति । हे पुत्र तव स्वमिदं । हे पुत्र मम स्वमिदं । हे पुत्र तुभ्यं स्वमिदं दीयते । हे पुत्र मह्यं स्वमिदं दीयते । हे पुत्र त्वां रक्षति । हे पुत्र मां रक्षति ।

चादियोगे च ॥ १७१ ॥ चादीनां योगे युष्मदादीनां पदमेतानादेशान्न प्राप्नोति । पुत्रो युष्माकं च । पुत्रोऽस्माकं च । पुत्रो युष्मभ्यं च दीयते । पुत्रोऽस्मभ्यं च दीयते । पुत्रो युष्मांश्च रक्षति । पुत्रोऽस्मांश्च रक्षति । चादयः कति । पञ्च । ते के । च वा ह अह एव इति चादयः ।

दृश्यार्थैश्चानालोचने ॥ १७२ ॥ अचक्षुरालोचने वर्तमानैर्दृश्यार्थैर्धातुभिर्योगे युष्मदस्मदोर्नित्यं वस्नसादयो न भवन्ति । अनालोचनमिति किम् । आलोचनं चक्षुरामिनालोचनं मनसश्च ध्यानं । ग्रामस्त्वां समीक्षते । ग्रामो मां समीक्षते । ग्रामो युष्मान् दीक्षमाणान् समीक्षते । ग्रामोऽस्मान् दीक्षमाणान् समीक्षते । ग्रामस्त्वां मनसा विलोकयति चाक्षुषीलक्षणं । मनसेति किं । ग्रामो मे पश्यति । ग्रामो मे मन्यति चक्षुःपरत्वं ।

इतिकारिका ।

---

## अथाव्ययान्युच्यन्ते ॥

अव्ययसंज्ञा । कति कानि । स्वर् अन्तर् पुनर् प्रातर् बहिर्, च वा, ह, अह, एव प्र, परा अप सम्, अनु, अव, निर्, दुर्, नि आङ् वि अति, अपि अधि सु, उत्, अभि प्रति, परि उप

इत्यादि प्रादयो विंशतिः । चिरम् नाना, अन्तर, नो, अथ अथो, अहो, पृथक्, यावत्, तावत्, सनाक्, सम्यक् ईषत् हि, यदि, वसु, ननु, तिर्यक्, मिथ्या, किल इत्थं वै तु ।

अव्ययाच्च ॥२७३॥ अव्ययाच्च परासां विभक्तीनां लुग्भवति ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥

इत्यव्ययानि ।

---

## अथ प्रत्यया उच्यन्ते ।

अव्ययसर्वनाम्नः स्वरादन्त्यात्पूर्वोऽक्कः ॥ २७४ ॥ अव्ययानां सर्वनाम्नां चान्त्यात्स्वरात्पूर्वोऽक् प्रत्ययो वा भवति कुत्सि-तस्य बहुलं । बहुलमिति किं ।

श्लोकः ।

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥१॥

उच्चकैः । नीचकैः । शनकैः । धीकै । सर्वे सर्वकः । विश्व विश्वकः । युष्मकाभिः । अस्मकाभिः । यकिः । इमके । अमीभिः । अमुकैः । भवतः भवकतः ।

विभक्तेश्च पूर्व इष्यते ॥ २७५ ॥ विभक्तेश्च पूर्वोऽक् प्रत्ययो वा इष्यते । त्वया त्वयका । मया मयका ।

आख्यातस्य चान्त्यस्वरात् ॥ २७६ ॥ आख्यातस्य चा

इत्यादि, प्रादयो विंशतिः । विना, नाना, अन्तर, मा, अथ, अथो, अहो, पृथक्, यावत्, तावत्, मनाक्, अपद्, ईषत्, हि, यदि, खलु, ननु, मिथ्, मिथ्या किम हन्त वै नु ।

अव्ययाश्च ॥२७३॥ अव्ययाश्च परासां विभक्तीनां लुग्भवति ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥

इत्यव्ययानि ।

---

## अथ प्रत्यया उच्यन्ते ।

अव्ययसर्वनाम्नः स्वरादन्त्यात्पूर्वोऽक्च ॥ २७४ ॥ अव्ययानां सर्वनाम्नां चान्त्यस्वरात्पूर्वोऽक्प्रत्ययो वा भवति कुत्सव यस्य बहुलं । बहुलमिति किं ।

श्लोकः ।

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥१॥

उच्चकैः । उच्चैः । नीचकैः । नीचैः । सर्वे सर्वके । विश्व विश्वके । युष्मकाभिः । अस्मकाभिः । एभिः । इमकैः । अमीभिः । अमुकैः । भवकान् भवन्तः ।

विभक्तेरत्व एव इष्यते ॥ २७५ ॥ विभक्तेरत्व पूर्वोऽक्प्रत्ययो वा इष्यते । त्वया त्वयका । मया मयका ।

आख्यातस्य चान्त्यस्वरात् ॥ २७६ ॥ आख्यातस्य चा-

श्लोक।

लक्षणवीप्सेत्थंभूतेष्वभिर्भागे च परिप्रती।
अनुरेषु सहार्थे च हीने चोपश्च कथ्यते॥ १॥

लक्षणार्थे वीप्सार्थे इत्थंभूतार्थे अभिशब्दः कर्मप्रवचनीयो भवति। भागे च परिप्रती कर्मप्रवचनीयौ भवतः॥ चशब्दात् लक्षणार्थे वीप्सार्थे इत्थंभूतार्थे परिप्रती कर्मप्रवचनीयौ भवतः। अनुशब्द एषु पूर्वोक्तेषु अर्थेषु कर्मप्रवचनीयो भवति। सहार्थे च। चशब्दः समुच्चयार्थे। हीनार्थे उपशब्दः कर्मप्रवचनीयो भवति॥ च-शब्दात् हीनार्थे अनुशब्दः कर्मप्रवचनीयो भवति। लक्षणार्थे वृक्षमभि विद्योतते विद्युत्। वीप्सार्थे वृक्षं वृक्षमभितिष्ठति विद्युत्। इत्थंभूतार्थे साधुर्देवदत्तो मातरमभि। वृक्षं परि विद्योतते विद्युत्। वृक्षं प्रति तिष्ठति। वृक्षं वृक्षं प्रति तिष्ठति। साधु देवदत्तो मातरं परि। साधु देवदत्तो मातरं प्रति। यदत्र मां परि स्यात्। यदत्र मां प्रति स्यात्। वृक्षमनु विद्योतते विद्युत्। वृक्षं वृक्षमनुतिष्ठति। साधु देवदत्तो मातरमनु। यदत्र मामनु स्यात्। पर्वतमनु वसते सेना। अन्वर्जुनं योद्धारः। उपार्जुनं योद्धारः। अर्जुनादन्ये योद्धारो निकृष्टा इत्यर्थः।

गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि॥ १६२॥ चेष्टाक्रियाणां गत्यर्थानां धातूनां प्रयोगेऽध्वनि वर्जिते कर्मणि द्वितीयाचतुर्थ्यौ भवतः। ग्रामं गच्छति। ग्रामाय गच्छति। नगरं व्रजति। नगराय व्रजति। इत्यादि। चेष्टायामिति किं। मनसा मेरुं गच्छति। मनसा स्वर्गं गच्छति। अनध्वनीति किं। अध्वान

विशेषणे ॥३९९॥ विशेषणे वर्त्तमानाल्लिङ्गात् तीया भवति ।

श्लोक ।

शिखया बटुमद्राक्षीत् श्वेतच्छत्रेण भूपतिम् ।
केशवं शंखचक्राभ्यां त्रिभिर्नेत्रैः पिनाकिनम् ॥

कर्त्तरि च ॥४००॥ कर्त्तरि च कारके वर्त्तमानाल्लिङ्गात् तीया भवति । देवदत्तेन कृतं । यज्ञदत्तेन भुक्तं । छात्रेण हन्यते । सुराभ्यां भुज्यते । मुनिनै क्रियते ।

तुल्यार्थे षष्ठी च ॥ ४०१ ॥ तुल्यार्थे योगे लिङ्गात् षष्ठी तृतीया च भवति । देवदत्तस्य तुल्य । देवदत्तेन तुल्य । देवदत्तस्य समान । देवदत्तेन समान । इत्यादि । कस्मिन्नर्थे चतुर्थी ? सम्प्रदानकारके चतुर्थी । किं सम्प्रदान ?

यस्मै दित्सा रोचते धारयते वा तत्सम्प्रदानम् ॥४०२॥ यस्मै दातुमिच्छा यस्मै रोचते यस्मै धारयते वा तत्कारकं सम्प्रदानसंज्ञं भवति । ब्राह्मणाय गां ददाति । देवदत्ताय रोचते मोदकः । यज्ञदत्ताय धारयते शतं । विष्णुमित्र पतिम्भ्ये दानं ददाति । देवाय रोचते हवि । मोक्षाय ध्यानं धारयते । पुरुषार्थे चतुर्थी भवति नान्यत्र । रजको वस्त्रं ददाति न तत्र पुरुषं । पुनरागमने षष्ठी । रजकस्य वस्त्रं ददाति ।

नमःस्वस्तिस्वाहास्वधालंवषट्योगे चतुर्थी ॥ ४०३ ॥ नम आदिभिर्योगे लिङ्गाच्चतुर्थी भवति । नमो देवाय । स्वस्ति जगते । स्वाहा हुताशनाय । स्वधा पितृभ्यः । अलं मल्लाय प्रतिमल्ल । शक्तो मल्लाय प्रतिमल्लः । वषडिन्द्राय । स्वाहा स्वधा वषट् दाने ॥

मी च भवति । जातिगुणक्रियाभिः समुदायस्य एकदेशस्य पृथक्करणं निर्धारणं । पुरुषाणां क्षत्रियः शूरतमः । पुरुषेषु क्षत्रियः शूरतमः । गवां कृष्णा गौः सम्पन्नक्षीरा । गोषु कृष्णा गौः सम्पन्नक्षीरा । गच्छतां धावन्तः शीघ्राः । गच्छत्सु धावन्तः शीघ्राः । इत्यादि ।

षष्ठी हेतुप्रयोगे ॥ ४१४ ॥ हेतोः प्रयोगे सति हेतौ षष्ठी भवति । अध्ययनस्य हेतोर्वसति । अन्नस्य हेतोर्वसति ।

स्मरणार्थकर्मणि ॥ ४१५ ॥ स्मरणार्थानां धातूनां प्रयोगे कर्मण्यनभिहिते कर्मणि षष्ठी भवति । क्वचन नित्यमन्यत्र विकल्पो दृश्यते । मातुः स्मरति । मातरं स्मरति । पितुरध्येति । पितरमध्येति इत्यादि ।

कृञः प्रतियत्ने ॥ ४१६ ॥ कृञः प्रतियत्ने गम्यमाने विद्यमानेऽपि कर्मणि षष्ठी भवति । सतो विशेषाधानं प्रतियत्नः । एधोदकस्योपस्कुरुते । एधोदकमुपस्कुरुते । इत्यादि ॥

हिंसार्थानामज्वरि ॥ ४१७ ॥ हिंसार्थानां ज्वरवर्जितानां धातूनां प्रयोगे कर्मणि षष्ठी भवति । चौरस्य रुजति । चौरं रुजति । चौरस्योज्जासयति । चौरमुज्जासयति । चौरस्य पिनष्टि । चौरं पिनष्टि । चौरस्य क्राथयति । चौरं क्राथयति । इत्यादि । अज्वरीति किं । चौरं ज्वरयति ज्वरः । चौरस्य सन्तापयतीत्यर्थः ।

कर्तृकर्मणोः कृति नित्यम् ॥ ४१८ ॥ कर्तृकर्मणोरर्थयो-र्नित्यं षष्ठी भवति कृत्प्रत्यययोगे । भवत आसिका । भवतः शायिका । भुवनस्य स्रष्टा । पर्वतानां भेत्ता । शास्त्राणां ज्ञाता । इत्यादि ।

तादर्थ्ये ॥ ४०४ ॥ तदर्थभावे वर्तमानाल्लिङ्गाच्चतुर्थी भवति। मात्राय तन्त्रज्ञान । मुक्तिप्रदानाय धनं । गुणाय सम्मतिः ।

श्लोकः ।

संयमाय श्रुतं धत्ते नरो धर्माय संयमम् ।
धर्मं मोक्षाय मेधावी धनं दानाय भुक्तये ॥ १ ॥

तुमर्थाच्च भाववाचिनः ॥ ४०५ ॥ तुम समानार्थाद्भाववाचिप्रत्ययान्ताल्लिङ्गाच्चतुर्थी भवति। भाववाचिनश्चेति वक्ष्यति। पाकाय व्रजति । पक्तये व्रजति । पचनाय व्रजति । पक्तुं व्रजति इत्यर्थः ॥ कर्मसम्प्रदाने पञ्चमी ? अपादाने पञ्चमी । किमपादानं ?

यतोऽपैति भयमादत्ते तदपादानम् ॥ ४०६ ॥ यस्मादपैति यस्माद्भयं भवति यस्मादादत्ते वा तत्कारकमपादानसंज्ञं भवति। वृक्षात्पर्णं पतति । व्याघ्राद्बिभेति । उपाध्यायादादत्ते विद्यां। इत्यादि ।

ईप्सितं च रक्षार्थानाम् ॥ ४०७ ॥ रक्षार्थानां धातूनां प्रयोगे ईप्सितमनीप्सितं च तत्कारकमपादानसंज्ञं भवति । यवेभ्यो गां रक्षति । गां यवात् रक्षति । गां निवारयतीत्यर्थः । पापात्पातु भगवान् । चौरेभ्यो निवारयति मन । अग्निभ्य आत्मानं रक्षति ।

पर्यपाङ्योगे पञ्चमी ॥ ४०८ ॥ परि अप आङ् योगे लिङ्गात्पञ्चमी भवति। अपपरी वर्जने । आङ् मर्यादाभिविध्योः । परिपाटलिपुत्राद्वृष्टो देवः । अपत्रिगर्तेभ्यो वृष्टो देवः । आ पाटलिपुत्राद्वृष्टो देवः ।

दिगितरार्तेन्यैश्च ॥ ४०६ ॥ दिग् इतर ऋते अन्य एभिर्योगे वर्तमानात्सिद्धात्पञ्चमी भवति । पूर्वो मागात् । उत्तरो मागात् । इतरो देवदत्तात् । ऋते धर्मात् कुतः सुखम् । अन्यो देवदत्तात् ।

पृथङ्नानाविनाभिस्तृतीया च ॥ ४१० ॥ पृथक् नाना विना एभिर्योगे सिद्धात्तृतीयापञ्चम्यौ भवतः । पृथक् देवदत्तेन । पृथग्देवदत्तात् । नाना देवदत्तेन । नाना देवदत्तात् । विना देवदत्तेन । विना देवदत्तात् ।

हेतौ च ॥ ४११ ॥ हेतौ च वर्तमानात्सिद्धात्पञ्चमी भवति । कस्मात्त्वम् समागतः । अग्निमानयं धूमत्वात् । अनित्यः शब्दः कृतकत्वात् । कस्मिन्नर्थे षष्ठी ? स्वाम्यादौ षष्ठी । के स्वाम्यादयः ? स्वामी सम्बन्ध समीप समूह विकार अवयव स्व इति स्वाम्यादयः । देवदत्तस्य स्वामी । देवदत्तस्य वस्त्रं । पर्वतस्य समीपं । हस्तीनां समूहः । क्षीरस्य विकारः । देवदत्तस्य बाहू । यज्ञदत्तस्य शिरः । विष्णुमित्रस्य स्वम् ।

स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः षष्ठी च ॥ ४१२ ॥ स्वाम्यादिभिर्योगे सिद्धात्षष्ठी सप्तमी च भवति । गवां स्वामी । गोषु स्वामी । गवामीश्वरः । गोष्वीश्वरः । गवामधिपतिः । गोष्वधिपतिः । गवां दायादः । गोषु दायादः । गवां साक्षी । गोषु साक्षी । गवां प्रतिभूः । गोषु प्रतिभूः । गवां प्रसूतः । गोषु प्रसूतः ।

निर्धारणे च ॥ ४१३ ॥ निर्धारणे अर्थे सिद्धात्षष्ठी सप्त-

चतुर्थी—कुबेराय बलिः—कुबेरबलिः । यूपाय दारु—यूपदारु । देवाय सुखं—देवसुखं । पञ्चमी—चौराद्भयं चौरभयं । ग्रामान्निर्गतः—ग्रामनिर्गतः । षष्ठी—चन्दनस्य गन्धः—चन्दनगन्धः । राज्ञः पुरुषः—राजपुरुषः । पुष्पाणां रसः—पुष्परसः । सप्तमी—व्यवहारे कुशलः—व्यवहारकुशलः । काम्पिल्ये सिद्धः—काम्पिल्यसिद्धः । धर्मे निरतः—धर्मनिरतः । एवं मोक्षसुखम् । संसारदुःखमित्यादि । [illegible] इति विग्रहे ।

अत्यादयः क्रान्ताद्यर्थे द्वितीयया ॥ ४२० ॥ अत्यादयः शब्दा क्रान्ताद्यर्थे द्वितीयया सह यत्र समस्यन्ते स समासस्तत्पुरुषसंज्ञो भवति । अत्यर्थानामप्रयोगः । अव्ययस्य पूर्वनिपातः । अतिसिद्धः । कोकिलया अवक्रुष्टं वनमिति विग्रहः ।

अवादयः क्रुष्टाद्यर्थे तृतीयया ॥ ४२१ ॥ अवादयः शब्दाः क्रुष्टाद्यर्थे तृतीयया सह यत्र समस्यन्ते स समासस्तत्पुरुषसंज्ञो भवति । स्वरो ह्रस्वो नपुंसके इत्यत्र योगविभागात् ।

गोरप्रधानस्यान्तस्य स्त्रियामादादीनां च ॥ ४२२ ॥ अप्रधानस्यान्तस्य गोरपरस्य तथाविधस्त्रियामादादीनां च ह्रस्वो भवति । इति ह्रस्वः । अवकोकिलं वनं । अवमयूरं । अध्ययनाय परिग्लान इति विग्रहः ।

पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ॥ ४२३ ॥ पर्यादयः शब्दा ग्लानाद्यर्थे चतुर्थ्या सह यत्र समस्यन्ते स समासस्तत्पुरुषसंज्ञो भवति । पर्यध्ययनः । कौशाम्ब्या निर्गतः । मथुराया निर्गत इति विग्रहः ।

भिन्नप्रवृत्तिनिमित्तत्वात् शब्दयोरेकाभिधेयत्वे समानाधिकरणत्वमुपाधिरिति सिद्धम् । प्रत्यर्थमन्यपदप्रयोग इति शब्द-शब्दनिवृत्तिः । विशेषणविशेष्य । अत्र नीलं किमिदमपेक्षते ? उत्पलमपेक्षते । उत्पलं किमित्यपेक्षते ? नीलमपेक्षते । नीलोत्पलम् । रक्तोत्पलम् । एवं वीरश्चासौ पुरुषश्च वीरपुरुषः । शुक्लश्चासौ पटश्च शुक्लपटः । शोभना चासौ भार्या च शोभनभार्या । दीर्घा चासौ माला च दीर्घमाला ।

कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते ॥ ४२८ ॥ इति हस्वः । इत्यादि ।

संख्यापूर्वो द्विगुरिति ज्ञेयः ॥ ४२९ ॥ स एव कर्मधारयः संख्यापूर्वत्वेन द्विगुरिति ज्ञेयः । स च त्रिविधः । उत्तरपदतद्धितार्थसमाहारभेदात् । पञ्चसु कपालेषु संस्कृतः आपूपः —पञ्चकपाल आपूपः । पञ्चसु गृहेषु प्रविष्टः—पञ्चगृहप्रविष्टः । अष्टसु कपालेषु संस्कृतः पुरोडाशः ।

अष्टनः कपालेषु हविषि ॥ ४४ ॥ अष्टन् शब्दस्य आत्वं भवति कपाले परे हविर्विशेषे । अष्टाकपालः पुरोडाशः अत्र-मुत्तरपदद्विगुः । पञ्च च ते गावश्च पञ्चगावः । समासान्तविधिरनित्य इत्यनेन [illegible] इति । धनं [illegible] ते पञ्चानां नाम्नामुत्पन्नाः । इति तद्धितार्थः । पञ्चानां पात्राणां समाहारः पञ्चपात्री । एवं त्रिलोकी । अकारान्ता द्विगुसमाहारे स्त्रियां पञ्चात्र पात्रादिवर्ज्यं वर्जयित्वा । पात्रादिगण इति किं । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । समाहारद्विगुरेकं । त्रिभुवनम् । त्रिभुवनेन । त्रिभुवनाय । त्रिभुवनात् । त्रिभुवनस्य त्रिभुवने । सर्वत्रैकवचनं ।

तत्पुरुषावुभौ ॥ ४४१ ॥ उभौ द्विगुकर्मधारयौ तत्पुरुषौ भवतः । इति तत्पुरुषसमासः । भ्रमासर्प । मनज । कनम इत्यादि । इति कर्मधारय । आरूढा वानरा यं वृक्ष । ऊढो रथो येन । उपहृत पशुर्यस्मै । पतितं पर्णं यस्मात् । चित्रा गावो यस्य । वीरा पुरुषा यस्मिन्देशे । लम्बौ कर्णौ यस्य । दीर्घौ बाहू यस्य । वीरा पुरुषा यस्मिन् देशे । इति स्थित ।

स्यातां यदि पदे द्वे यदि वा स्युर्बहून्यपि नान्यस्य पद स्वार्थे बहुव्रीहि ॥ ४४२ ॥ यत्र समासे द्वे पदे यदि वा स्वार्थं बहूनि पदानि वा स्युरन्यपदार्थे समस्यन्ते स समासो बहुव्रीहिर्भवति । आरूढवानर । ऊढरथः । उपहृतपशु । पतितपर्ण । चित्रगु । वीरपुरुषादेश । लम्बकर्ण । दीर्घबाहु । वीरपुरुष । बहूनामपि । बहवो मत्ता मातङ्गा यस्मिन् वने तत् बहुमत्तमातङ्गं वनं । बहूनि रमन्ते पद्मानि यस्मिन् वृक्ष स बहुरमत्पद्मो वृक्ष । व्याख्यानात्तप यत्नुमारिति व्याख्यान अनुपयुक्ताप । उपगता दश येषां ते उपगतदशा । आसन्ना दश येषां त आसन्नदशा । अदूरा दश येषां त अदूरदशा । अधिका दश येषां त अधिकदशा । पुत्रेण सह आगतः सपुत्र सहपुत्र ।

सहस्य सो बहुव्रीहौ वा ॥ ४४३ ॥ सहशब्दस्य सो वा भवति बहुव्रीहौ समासे । जनेन सह वर्तत इति सजनः । एव सधर्म । जनन्या सह वर्तते इति स जननि । एव सबधु । गौर प्रधानस्यत्यादिना ह्रस्व । अव्ययानां पूर्वनिपात ।

युधि क्रियाव्यतिहारे इच् ॥ ४४४ ॥ अन्यपदस्य...

मुखे भिन्नाभ्यन्तरे बहुव्रीहिसमासात् इच् भवति ।

इच्पूर्वपदस्याकारः ॥ ४४५ ॥ इचि परे पूर्वपदस्याकारो भवति । दण्डैश्च दण्डैश्च प्रहृत्य युद्ध—दण्डादण्डि । एवं गदागदि । खड्गाखड्गि । केशाकेशि । मुष्टामुष्टि । कचाकचि । इचि सत्वा पूर्वपदस्य दिरोर्भेदभावात् सा विविक् ।

दिगिक् तथा ॥ ४४६ ॥ तथा दिगभिधेये बहुव्रीहिरिव । सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भाव । दक्षिणपूर्वा । पश्चिमोत्तरा । दक्षिणपश्चिमा । उत्तरपूर्वा । इत्यादि । उत्तरस्य मयूरस्य । मध्यस्य कदिरस्य मध्यमस्य । इति स्थिते ।

द्वन्द्वः समुच्चयोर्नाम्नोर्बहूनां वाऽपि यो भवेत् ॥४४७॥ द्वयोर्नाम्नोर्बहूनां वापि समुच्चयोऽत्र यो भवेत् । स च इतरेतरयोग-समाहारत्वेन द्विप्रकारः ।

श्लोक ।

यत्र द्वित्वं बहुत्वं च स द्वन्द्व इतरेतरः ।
समाहारो भवेदन्यो यत्रैकत्वनपुंसके ॥

द्वित्वे द्विवचनं । बहुत्वे बहुवचनं । रामलक्ष्मणौ ॥ भवद्गिरिपत्रासाः ।

अल्पस्वरतरं तत्र पूर्वम् ॥४४८॥ तत्र द्वन्द्वे समासे अल्पस्वरतरं पदं पूर्वं निपात्यते । प्लक्षस्य न्यग्रोधस्य प्लक्षन्यग्रोधौ । एवं रथस्याती । अल्पस्वरं द्विपदमहराणोऽन्यत्र शंखदुन्दुभिवीणा ।

अभ्यर्हितं द्वयोः ॥४४९॥ तत्र द्वन्द्वे समासे द्वयोर्यदर्हितं तत्पूर्वं निपात्यते । वासुदेवार्जुनौ । शक्रराजौ । हंसचक्रौ । वेदवेदौ । कचित् व्यभिचरति च । तथाहि ।

न नरनारायणादिषु ॥ ४५० ॥ नरनारायणादिषु सर्वत्र पदं पूर्वं न निपात्यते । नरश्च नारायणश्च नरनारायणौ । उमामहेश्वरौ । चन्द्रसूर्यौ । इत्यादि ।

मातुः पितर्यरङ् ॥ ४५१ ॥ द्वन्द्वे समासे पितरि उत्तरपदे मातृशब्दस्य ऋत अरादेशो भवति पक्षान्तरे च । माता च पिता च मातरपितरौ । मातापितरौ ।

पुत्रे ॥ ४५२ ॥ पुत्रशब्दे उत्तरपदे द्वन्द्वविषये विद्यायोनिसम्बन्धिन ऋदन्तस्य आत्वं भवति । माता च पुत्रश्च मातापुत्रौ । एवं होतापुत्रौ । इति द्वन्द्वसमासः ॥ कुम्भस्य समीपं । अव्ययस्य समासः ।

पूर्वं वाच्यं यदेतस्य सोऽव्ययीभाव इष्यते ॥ ४५३ ॥ यस्य समासस्य पूर्वमव्ययं पदं वाच्यं भवेत्सोऽव्ययीभाव उच्यते । अव्ययानां स्वपदविग्रहो नास्तीत्यन्यपदेन विग्रहः इति वचनात् समीपस्य उपादेशः । अव्ययस्य निरादेशः । समासे कृते सति अव्ययानां पूर्वनिपातः ।

स नपुंसकलिङ्गं स्यात् ॥ ४५४ ॥ सोऽव्ययीभावसमासो नपुंसकलिङ्गं स्यात् । अव्ययप्रधानत्वादलिङ्गे प्राप्ते वचनमिदं ।

अव्ययीभावादकारान्ताद्विभक्तीनाममपञ्चम्याः ॥ ४५५ ॥ अकारान्तादव्ययीभावाद्विभक्तीनां स्थाने अपञ्चम्या अम् भवति । उपकुम्भं । निरन्तरं । प्रत्युपकूलं । उपगङ्गं । उपमध्यं । उपराजं । उपनद्यं । उपवनं । उपनगं । उपसूर्यं । उपमार्गं । उपप्रस्थं । भावस्याभावो निर्दरं । मक्षिकाणामभावो निर्मक्षिकं । शीतस्यातिक्रम-

सपनु। कर्मुतिक्रम—अतिक्रम। एवमतिरि। अतिगु। अतिसु।

सर्मं भूमिपदात्योः ॥ ४५८ ॥ भूमिपदात्याः परयोः सम स्य स्यपरस्य समित्यादेशो भवति। भूमे समत्वं समभूमि। पदातीनां समत्वं समं पदाति।

सुविनिदुर्भ्यः स्वापिसूतिसमानाम् ॥४५९॥ सुविनिदुर्भ्यः परस्य स्वापि सूति समानां सकारस्य षकारो भवति। सुषमं विषमं निष्षमं दुष्षम। अपरसमं। इत्यादि।

द्वन्द्वैकत्वम् ॥ ४६० ॥ समाहारद्वन्द्वस्यैकत्वं नपुंसकलिङ्गञ्च स्यात्। अर्कश्च अश्वमेधश्च अर्काश्वमेधौ। तथा समाहार अर्काश्वमेधं। एवं दवामस्कारं। हंसमयूरं। मधुराफलसिन्धुनं। पाणिपादं। वनरामलक्ष्मं। सुरासुरं। शुकश्च हंसश्च मयूरश्च कोकिलश्च शुकहंसमयूरकोकिलं इत्यादि।

तथा द्विगोः ॥ ४६१ ॥ तथा समाहारद्विगोरप्येकत्वं नपुंसकलिङ्गं च स्यात्।

समासान्तगतानां वा राजादीनामदन्तता ॥ ४६२ ॥ समासान्तगतानां राजादीनामदन्तता अप्रत्ययो भवति। वा समुच्चये। पञ्चानां गवां समाहारः पञ्चगवं। चतुर्णां पथां समाहारः चतुष्पथं।

न सूत्रे क्वचित् ॥ ४६३ ॥ क्वचित्सूत्रे द्वन्द्वैकत्वं भवति नपुंसकलिङ्गत्वं न स्यात्। विरामस्यञ्जनादयो। एव पचि वचि सिचि रुचि मुचेरात्। इत्यादि।

पुंवद्भाषितपुं स्कानूङपूरणप्यादिषु स्त्रियां तुल्याधिकरणे

॥ ४६४ ॥ स्त्रियां वर्तमानं भाषितपुंस्कं अनूङन्तं पूर्वपदभूतं पुंवद्भवति स्त्रियां वर्तमाने तुल्याधिकरणे पूरण्यादिगणवर्जिते उत्तर पदे परे । शोभना भार्या यस्यासौ शोभनभार्यः । एवं दीर्घजङ्घभार्यः । इत्यादि । भाषितपुंस्कमिति किं । गङ्गाभार्यः । अनूङ् इति किम् । ब्रह्मबन्धूभार्यः । अपूरणीप्रियादिष्विति किं । कल्याणी पञ्चमी यासां रात्रीणां ता कल्याणीपञ्चमा रात्रयः । कपूरणाग्रहण । पूरणी पञ्चमी कल्याणी मनोज्ञा सुभगा दुर्भगा स्वकान्ता क्षान्ता वामना ।

संज्ञापूरणीकोपधास्तु न ॥ ४६५ ॥ स्त्रियां वर्तमाना भाषितपुंस्काऽनूङन्ता संज्ञापूरणीप्रत्ययान्ता कोपधा पूर्वपदभूता पुंवद्रूपा न भवन्ति स्त्रियां वर्तमाने तुल्याधिकरणे पदे पूरण्यादि गणवर्जित उत्तरपदे परे । दत्ता भार्या यस्यासौ दत्ताभार्यः । पञ्चमी- भार्यः । पाचिकाभार्यः । गौरभार्यास्तत्साङ्गिना हस्तः । इत्यादि ।

कर्मधारयसंज्ञे तु पुंवद्भावो विधीयते ॥ ४६६ ॥ स्त्रियां वर्तमाना भाषितपुंस्का अनूङन्ता संज्ञापूरणीप्रत्ययान्ता—कोपधा अपि कर्मधारयसमासे तु पुंवद्भवन्ति स्त्रियां वर्तमाने तुल्याधिकरणे पूरण्यादिगणवर्जित उत्तरपदे परे । शोभना चासौ भार्या च शोभन- भार्या । एवं दत्तभार्या । पाचकभार्या । पञ्चमभार्या इत्यादि । भाषित- पुंस्कमिति किं ? खट्वावृन्दारिका । अनूङिति किं ? ब्रह्मबन्धूवृन्दारिका ।

आकारो महतः कार्यस्तुल्याधिकरणे पदे ॥ ४६७ ॥ महत आकारः कार्यस्तुल्याधिकरणे पदे परे । महांश्चासौ देवश्च महादेवः । अन्तरङ्गत्वात् व्यञ्जनान्तस्य यस्मुभोरिति न्यायादनुस्वारलोपश्च । प्रथमनान्तस्य लोपे कृते सति पश्चात् नस सिद्धिरित्यपि

श्लोकः ।

बहुव्रीह्यव्ययीभावौ द्वन्द्वतत्पुरुषौ द्विगुः ।
कर्मधारय इत्येते समासाः षट् प्रकीर्तिताः ॥ १ ॥

इति समासः समाप्तः ।

## अथ तद्धितं किञ्चिदुच्यते ॥

उपगोरपत्यं । भृगोरपत्यं । विदेहस्यापत्यं । उपगोरपत्यं । इति स्थिते ।

**अणपत्ये** ॥ ४७६ ॥ षष्ठ्यन्तान्नाम्नोऽण्प्रत्ययो भवति अपत्यं अभिधेये । कृत्तद्धितादिना विभक्तिलोपः ।

**वृद्धिरादौ सणे** ॥ ४८० ॥ स्वराणामादिस्वरस्य वृद्धिर्भवति सणकारानुबन्धे तद्धिते परे । का वृद्धिः ?

**आरुत्तरे च वृद्धिः** ॥४८१॥ अवर्ण ऋवर्ण इवर्ण उवर्णानामाम् आर् उत्तरे (ऐ औ) च द्वे सन्ध्यक्षरे वृद्धिसंज्ञा भवति । प्रयोगात्—अवर्णस्य आकारवृद्धिः । ऋवर्णस्य आर् वृद्धिः । इवर्णस्य एकारस्य च ऐकारवृद्धिः । उवर्णस्य ओवर्णस्य च औकारवृद्धिः ।

**उवर्णस्त्वोत्वमापाद्य** ॥ ४८२ ॥ उवर्णस्तु ओत्वमापाद्यतेऽस्तद्धिते स्वरे ये च परे ।

**अयोनयावादेशावोकारौकारयोरपि** ॥ ४८३ ॥ आकार औकारयोरायावौ आदेशौ भवतः तद्धिते स्वरे य च परे । औपगव । भार्गव । वैदेह । औपगव औपगवौ औपगवाः । इति पुरुषशब्दवत् । एवं भार्गवः भार्गवौ । वैदेह वैदेहौ । आङ्गिरस ।

रागात् अण् । कुसुम्भेन रक्तं कौसुम्भं । एवं हारिद्रं वस्त्रं । कौङ्कुमं ।
माञ्जिष्ठं । काषायं । नक्षत्रयोगात् । पुष्येण चन्द्रयुक्तेन युक्तः कालः ।

पुष्यतिष्ययोर्नक्षत्रे ॥ ४ । ३ ॥ नक्षत्रार्थे वर्तमानयोः पुष्य-
तिष्ययोरुपधस्य लोपो भवति यकि परे । इति यकारलोपः ।

मत्स्यस्य यस्य स्त्रीकारे ईये चागस्त्यमत्स्ययोः ॥ ४ । ४ ॥
इति सूत्राद् इति अनुवर्तते । पौषं अहः । पौषो मासः । पौषी
रात्रिः । पौषमहः । एवं तैषो मासः । तैषी रात्रिः । तैषमहः । चित्रया
चन्द्रयुक्तया युक्तः कालः चैत्रः । वैशाखः । एवं ज्यैष्ठः । आषाढः ।
श्रावणः । भाद्रपदः । आश्वयुजः । कार्त्तिकः । मार्गशिरः । माघः ।
फाल्गुनः । एवं सर्वत्र । समूहात् । युवतीनां समूहः यौवतं । एवं
दार्भं । भैक्षं । क्षात्रं । शौद्रं । आर्यं । मार्गं । सास्य देवता । जिनो
देवता अस्य इति जैनः । एवं शैवः । वैष्णवः । ब्राह्मणः । बौद्धः ।
कापिलः । सौरः । चान्द्रः । [illegible] । जिन देवतास्य जैनः इत्यादि ।
छन्दोऽधीते वेद वा छान्दसः । व्याकरणं वेत्त्यधीते वा वैयाकरणः ।
भारतः । तस्येदं । मृगस्य इदं मांसं मार्गं । सौकरं । कौमारं ।
पुत्रस्य पौत्रं । पैत्रं । पार्थं । पूत इव पौतनं । व्यामाद्रियैस्योर्ण गव्यो
दृश्यते । चक्षुषा गृह्यते चाक्षुषं रूपं । एवं श्रावणः शब्दः । रसनो
रसः । स्पर्शेन स्पार्शः । दृषदि पिष्टा दार्षदाः सक्तवः । उलूखलेन
क्षुण्णः औलूखलः यावकः । अश्वैरुह्यते आश्वो रथः । चतुर्भिः
उह्यते चातुरं शकटं । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । त्रिविधं
एव त्रैविधं । धनुर्भिः पाठवं । चाक्षुषं कौशलमित्यादि ।

हन्ति दीप्यति संपूर्णं तरलीकृतवानपि । ग्रथिता
चिदन्यामियोगात्म्य क्रीडाहरस्तुवादपि ॥ २ ॥

कुबेरवत् । वशिवत् । गुणे । वशिरिव गुरुवत् वशिवत् । अग्निरिव रौरव अग्निवत् । भागिनिरिव भौव्यभागिनिवत् । भेरुरिव इव सुरभि भीरुवत् । क्रियार्थे । भाषस इव वर्तते भाषसवत् । एवं पितृवत् ।

तस्यै भावे ॥ ४१० ॥ भावेऽभिधेये तस्यै भवतः । शब्दस्य प्रवृत्तिनिमित्तं भावो भवति । तत्त्वमस्य स्त्रियां वृत्तिः । त्वप्रत्ययस्य नपुंसके वृत्तिः । पटस्य भावः पटता पटत्वं । एवं घटस्य घटत्वं । गोत्वं गोत्वं । इति द्रव्यभावः । शुक्लस्य भावः शुक्लता शुक्लत्वं । रूपता रूपत्वं । रसता रसत्वं । शान्तता शान्तत्वं । सुखता सुखत्वं । इति गुणभावः । प्रश्नोत्तरता प्रश्नोत्तरत्वं । गमनता गमनत्वं इति क्रियाभावः ।

यण् च प्रकीर्तितः ॥ ४११ ॥ भावेऽभिधेये यण् प्रकीर्तितस्तस्यै च । जडस्य भावो जाड्यं जडता जडत्वं । एवं ब्राह्मण्यं ब्राह्मणता ब्राह्मणत्वं ।

अपुट् स्वरतद्धिते ये ॥ ४१२ ॥ तद्धिते ये परे अपुट् स्वरवत्कार्यं भवति । अपुट्सूत्राणां सेट्स्यपि असमेवेशत्वस्य मित्युक्तं । विदुषो भावो वैदुष्यं । महीयसामहयाचिष्यरूपस्य तस्मिन्नपि यण् प्रकीर्तितस्तस्यै च भवतः । ब्राह्मणस्य कर्म ब्राह्मण्यं ब्राह्मणता ब्राह्मणत्वं । पुनः पुनर्मानः पौन पुन्यं ।

तदस्यास्तीति मन्त्वन्त्विन् ॥ ४१३ ॥ तदिति प्रथमान्तादस्याऽस्तीत्यस्मिन्नर्थे मतु वतु विन् इन् इत्येते प्रत्यया भवन्ति । गावोऽस्य सन्तीति गोमान् । आयुरस्यास्तीति आयुष्मान् । इनिप्रत्ययस्य

विवर्णावर्णान्तात् अवर्णोपधात् मकारान्तात् मकारोपधात्, धुडन्तात् अशिडन्तात् परो वम् मत्ययो भवति। अशिडन्तादिरुक्ते सति तद्वर्जं सामान्यमेव। तत्र इकारो यत्नीय । अवर्णान्तात्—वृक्षाऽस्यास्तीति वृक्षवान्। शालास्यास्तीति शालावान्। इत्यादि। अवर्णोपधात्—तकास्यास्तीति तक्वान्। कर्मास्यास्तीति कर्मवान्। अवधिमकारलोप —मकारान्तात्—इदमस्यास्तीति इदंवान्। किमस्यास्तीति किंवान्। इत्यादि। मकारोपधात्—लक्ष्मीरस्यास्तीति लक्ष्मीवान्। एवं यमवान्। इत्यादि। धुडन्तात्। विद्युदस्यास्तीति विद्युत्वान्। वर्गप्रथमा इत्यादिना तृतीयं प्राप्ते सति। तयोर्न तृतीयो मत्वर्थे इत्यनेन सूत्रेण तृतीयत्वं न भवति। अशिडन्तादिति किं। आयुरस्यास्तीति आयुष्मान्।

असन्तमायामेधास्रग्भ्यो वा विन् ॥ ४१४ ॥ एभ्यः परो विन् मत्ययो वा भवति। यशोऽस्यास्तीति यशस्वी। पक्षे वम्, यशस्वान्। अत्र सकारस्य वकारो निसर्गश्च न भवति। तपोऽस्यास्तीति तपस्वी। तपस्वान्। एवं तेजस्वी तेजस्वान्। धुटां तृतीयः। धुटां तृतीयो भवति आपञ्चमि सामान्ये। शुचर्णन्त्यगकसा दृश्या इति न्यायात् सकारस्य दकारे प्राप्ते सति।

तयोर्न तृतीयो मत्वर्थे ॥ ४१५ ॥ तकारसकारयोस्तृतीयो मत्वर्थे न भवति। मत्वर्थे इति किं २८। मत्सत्वे। पक्षान्, रेफसो विसर्जनीय प्राप्ते महद्वाधिता निषिद्धविधिना एव सम्पूर्णवत्। मायास्यास्तीति मायावी मायावान्। मेधास्यास्तीति मेधावी मेधावान्। स्रगस्यास्तीति स्रग्वी स्रग्वान्। व्यञ्जनान्तस्य यत्सुभोरिति न्यायात्

प्रत्यया भवति। पूर्वस्मिन्नहनि पूर्वेद्युः। एवं परेद्युः। अन्येद्युः। अन्यतरेद्युः। इतरद्युः। अपरद्युः। अपरेद्युः।

उभयाद्युश्च ॥ ५४७ ॥ सप्तम्यन्तादुभयशब्दात्परो द्युस् भवति। चकारात् एद्युस् भवति। उभयस्मिन्नहनि उभयद्युः। उभयेद्युः।

परादेरेद्यविस् ॥ ५४८ ॥ परादेर्गणात्पर एद्यविस् प्रत्ययो भवति। परस्मिन्नहनि परेद्यवि। एवमन्येद्यवि। अन्यतमेद्यवि। इत्यादि।

प्रकारवचने तु था ॥ ५४९ ॥ अत्र पादे सर्वनाम्नः प्रकारवचने तु था भवति। प्रकारस्तु सदृशार्थो विशेषार्थश्च सामान्यस्य भेदकः प्रकारः। सर्वेण प्रकारेण सर्वथा। एवमन्यथा। यथा। तथा। उभयथा। पूर्वथा। अपरथा। सामान्यार्थविशेषणः सर्वविभक्तिभ्यो ह्ययं थाप्रत्ययः। सर्वस्मै प्रकाराय यदि वा सर्वस्मिन् प्रकारे सर्वथा इत्यादि।

संख्यायाः प्रकारे धा ॥ ५५० ॥ संख्यायाः परः प्रकारवचने धा भवति। चतुर्भिः प्रकारैः चतुर्धा। एवं द्विधा। एकधा। बहुभिः प्रकारैर्बहुधा। पञ्चधा। पञ्च प्रकारा इति विग्रहः।

षष् उत्वम् ॥ ५५१ ॥ षषूसंख्यायाः उत्वं भवति। षड्धा। षोढा। नवधा। दशधा। शतधा। सहस्रधा। लक्षधा। कतिधा।

द्वित्रिभ्यां धमञ्चा च ॥ ५५२ ॥ द्वित्रिभ्यां परो धमञ् एधा च प्रत्ययौ भवतः प्रकारवचने। द्वैधं त्रैधं। द्वेधा त्रेधा।

इदंकिंभ्यां थमु थम् ॥ ५५३ ॥ इदंकिंभ्यां परः थमु

त्वत्परिमाणमस्य यावान्। एवं तावान् एतावान्।

किमो डियन्तु ।५६७॥ किम् शब्दात्परो डियन्तु प्रत्ययो भवति परिमाणेऽर्थे। किंपरिमाणमस्य कियान्।

इदमः ।५६८॥ इदम् परो डियन्तु प्रत्ययो भवति परिमाणेऽर्थे। इदं परिमाणमस्य इयान्।

अभूततद्भावे कृभ्वस्तिषु विकाराद् च्विः ॥ ५६९ ॥ अभूततद्भावे विकारात् च्विप्रत्ययो भवति कृभ्वस्तिषु परतः।

च्वौ चावर्णस्य ईत्वम् ॥५७०॥ अवर्णस्य ईत्वं भवति च्वौ परे। सर्वापहारी प्रत्ययस्य लोपः। च्विप्रत्यये परे पूर्वस्वरस्य दीर्घः। शुक्लीकरोति। शुक्लीभवति। शुक्लीस्यात्। पटूस्यात्। कवीकरोति। कवीभवति। कवीस्यात्। मालीकरोति। मालीभवति। मालीस्यात्।

ऊर्ध्वे दघ्नद्वयसटौ च ॥५७१॥ ऊर्ध्वमानवाचिनि प्रमाणेऽर्थे दघ्नद्वयसटौ प्रत्ययौ भवतः। चशब्दान्मात्रट् भवति। ऊरू प्रमाणमस्य ऊरुदघ्नम्। ऊरुद्वयसम्। ऊरुमात्रमुदकम्।

हस्तिपुरुषादण् च ॥५७२॥ हस्तिन् पुरुष इत्येताभ्यां मानेऽण् भवति। चशब्दान्मात्रट् दघ्नट् द्वयसट् च भवति। हस्ती प्रमाणमस्य हास्तिनम्। हस्तिमात्रम्। हस्तिदघ्नम्। हस्तिद्वयसम्। पुरुषप्रमाणमस्य पौरुषं। पुरुषमात्रं। पुरुषदघ्नम्। पुरुषद्वयसमुदकमित्यर्थः।

प्रमाणे तयट् ॥५७३॥ प्रमाणवाचिनः परो मयट् प्रत्य

वा भवति। सुवर्णं भस्म न सुवर्णमयम्। एवमश्मं भस्म तमश्ममयम्। भस्ममयम्। यदि वा भन्नं भस्म तमत्र अश्ममयं भस्म। अन्नं भस्म तमत्र अश्ममयं चीवरं। मरमं भस्म तमत्र मरममयं पात्रस्थानं। भस्ममयो मठः। भस्ममयी तरसिन्धी। भस्ममयी तनुः।

न य्वो पदाद्योर्वृद्धिरागमः ॥४७४॥ य्व सन्तिपथा विधिना गम्यते। आदिरत्र समीपवचनः। य्व च य्व च य्वौ तयोर्य्वोः स्वराणामाद्यो स्वरात्पूर्वयोरिकारोकारयोः वृद्धिर्न भवति तयोरादौ वृद्धिरागमो भवति णकारानुबन्धे तद्धिते प्रत्यये परे। स्थानेऽन्तरतम इति न्यायाद् यकारस्य ऐकारः वकारस्य औकारः। व्याकरणं वेत्ति अधीते वा वैयाकरणः। द्वारे नियुक्तो यस्यामि दौवारिकः। स्वोरिति किं? महानसे नियोगोऽस्यति माहानसिकः। इत्यादि।

> मन्दिनाम समासञ्च तद्धितरषति नामत।
> चतुष्कमिति तस्याश्रमिस्येतच्छब्दकर्मणा ॥ १ ॥
> माबसेतद्विविधेन आदिपदतर्गन्धिना।
> कृतायां रूपमालायां चतुष्के पर्यपूर्यत ॥ २ ॥
> चतुःपरिदः कृता स्त्रीणां तावतु सन्ततिर्न्यायात्।
> आपच प्रापकस्तासां भीमानूपमवीचकृत् ॥ ३ ॥
> तेन प्राहुर्ये कुमाय च कश्चिदं पाठहेतवे।
> कातन्त्रकं तस्कौमारं नाम्ना शब्दानुशासनम् ॥ ४ ॥
> यद्वदन्त्यविदः केचित् शिक्षिन स्कन्दवादिनः।
> पुष्पदामिर्मतरये स्यात्स्वरसाप्रकमतः परम् ॥ ५ ॥

हस्व प्लुत पत केकी वाह प्लुतस्वरानुगम् ।
त्रिमात्रं च शिखी ब्रूयादिति प्रामाणिकोदितम् ॥ ६ ॥
न चात्र मात्राम्नाय स्वरेषु प्लुतसंग्रहः ।
तस्मात् श्रीभावसेनादिप्रमितिस्थैव प्रतिपद्यताम् ॥ ७ ॥

इति श्रीमानसमर्थविरचितायां कातन्त्ररूपमालायां स्याद्यन्तप्रकरणं
प्रथमः संदर्भः ॥

---

अथ द्वितीयः संदर्भः ।

## तिङन्तप्रकरणम् ।

सर्वकर्मविनिर्मुक्तं मुक्तिलक्ष्म्याश्च वल्लभम् ।
चन्द्रप्रभजिनं नत्वा तिङन्ताः कथ्यते मया ॥ १ ॥

अथ त्याद्यो विभक्तयः प्रदर्श्यन्ते ॥ १ ॥ तास्तु दशविधा भवन्ति । तद्यथा ? वर्तमाना । सप्तमी । पञ्चमी । ह्यस्तनी । अद्यतनी । परोक्षा । श्वस्तनी । आशीः । भविष्यन्ती । क्रियातिपत्तिरिति ।

वर्तमाना ॥ २ ॥ ति तस् अन्ति । सि थस् थ । मि वस् मस् । ते आते अन्ते । से आथे ध्वे । ए वहे महे—इमानि अष्टादश वचनान्यपि वर्तमानसंज्ञानि भवन्ति ।

तस् स्यन्ति स्यसि स्यथस् स्यथ स्यामि स्यावस् स्यामस् स्यते स्येते
स्यन्ते स्यसे स्येथे स्यध्वे स्ये स्यावहे स्यामहे—स्यन् सहितानि
स्यादीनि वचनानि भविष्यन्तीसंज्ञानि भवन्ति ॥

स्यादीनि क्रियातिपत्तिः ॥ ११ ॥ स्यत् स्यतां स्यन्, स्यस्
स्यतं स्यत, स्यं स्याव स्याम स्यत स्येतां स्यन्त, स्यथास् स्येथां
स्यध्वं स्ये स्यावहि स्यामहि-स्यन् सहितानि स्यादीनि क्रियातिपत्ति
संज्ञानि भवन्ति ॥

षडाद्याः सार्वधातुकम् ॥१२॥ षण्णां विभक्तीनां आद्याः
तस्यो विभक्तयः सार्वधातुकसंज्ञा भवन्ति ।

अथ परस्मैपदानि ॥ १३ ॥ सर्वविभक्तीनां आद्यानि नव वच
नानि परस्मैपदसंज्ञानि भवन्ति । अत्र नवग्रहणमात्मनेपदव्यवच्छेदार्थं
पूर्वा नवेति अनुगन्तव्यम् । ति तस् अन्ति । सि थस् थ । मि वस्
मस् । एवं सर्वविभक्तिषु ।

नव पराण्यात्मने ॥ १४ ॥ सर्वविभक्तीनां पराणि नव वच
नानि आत्मनेपदसंज्ञानि भवन्ति । ते आते अन्ते । से आथे ध्वे ।
ए वहे महे । एवं सर्वविभक्तिषु ।

त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ १५ ॥ परस्मैपदानामा-
त्मनेपदानां च त्रीणि त्रीणि वचनानि प्रथममध्यमोत्तमपुरुषसंज्ञानि
भवन्ति । ति तस् अन्ति इति प्रथमपुरुषः । सि थस् थ इति मध्यम-
पुरुषः । मि वस् मस् इत्युत्तमपुरुषः । ते आते अन्ते इति प्रथम-
पुरुषः । से आथे ध्वे इति मध्यमपुरुषः । ए वहे महे इत्युत्तमपुरुषः ।
एवं सर्वविभक्तिषु । एता विभक्तयो धातोर्भवन्ति । को धातुः ?

क्रियाभावो धातु ॥ १६ ॥ य शब्द क्रियां भावयति संपादयति स धातुसंज्ञो भवति । इति भ्वादीनां धातुसंज्ञायां । भू सत्तायां । भू इति स्थिते ।

प्रत्यय परः ॥ १७ ॥ प्रतीयते अनेनार्थ स प्रत्ययः । विरुसितार्थ इत्यर्थ । प्रकृतेः परः प्रत्ययो भवति । इति सर्वत्याद्विप्रसङ्गः ।

काले ॥ १८ ॥ यत मानातीतमविष्यल्लक्षणः कालः । कालत्रयविहितं भवति ।

सम्प्रति वर्तमाना ॥ १६ ॥ आरब्धापरिसमाप्तक्रियालक्षण सम्प्रतीत्युच्यते । सम्प्रतिकाले वर्तमाना विभक्तिर्भवति । तत्रापि युगपत्प्राप्तावाचनमाप्त्या—

शेषात्कर्तरि परस्मैपदम् ॥ २० ॥ यथाप्रत्ययमाणकारयादि पाच्छेषाः कर्त्तरि परस्मैपदं भवति । तत्रापि—

नाम्नि प्रयुज्यमानेऽपि प्रथमः ॥ २१ ॥ नाम्नि प्रयुज्यमाने अप्रयुज्यमानेऽपि प्रथमपुरुषो भवति । तत्राप्येकत्वविवक्षायां प्रथमैकवचनं ति ।

अन् विकरणः कर्त्तरि ॥२२॥ धात्वर्थविरुयामध्येऽन् भवति कर्त्तरि विहिते सार्वधातुके परे ।

अनि च विकरणे ॥ २३ ॥ नाम्यन्तस्य लघुनाम्युपधाया गुणो भवत्यन्विकरणे परे । को गुणः ?

अर् पूर्वे द्वे च सन्ध्यक्षरे गुणः ॥२४॥ ऋवर्ण ( अवर्णा

द्रष्टव्यं स्मर्यतां ) भव् पूर्वे ह्रे च सम्प्रसारे गुणो भवति । इत्युवर्णस्य ओकारो गुणः । सन्धिः । स भवति । तत्रैव द्वित्वविवक्षायां प्रथम पुरुषद्विवचन तस् । भू तस् इति स्थिते—

रसकारयोर्विसर्गः ॥ २५ ॥ पदान्ते रेफसकारयोर्विसर्गो भवति । तौ भवतः ॥ तत्रैव बहुत्वविवक्षायां प्रथमपुरुषबहुवचन अन्ति । भू अन्ति इति स्थिते—

असन्ध्यक्षरयोरस्य तौ तल्लोपश्च ॥२६॥ अत्र धातुमत्ताप्य अकारसन्ध्यक्षरयोः परतोऽकारस्य अकारसन्ध्यक्षरौ भवतस्तस्य लोपो भवति । ते भवन्ति ।

युष्मदि मध्यमः ॥२७॥ युष्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽपि मध्यम पुरुषो भवति । त्वं भवसि । युवां भवथः । यूयं भवथ ।

अस्मद्युत्तमः ॥ २८ ॥ अस्मदि प्रयुज्यमानेऽप्रयुज्यमानेऽपि उत्तम पुरुषो भवति ।

अस्य वमोर्दीर्घः ॥ २९ ॥ अस्य दीर्घो भवति वमोः परतः । अहं भवामि । आवां भवावः । वयं भवामः । अप्रयुज्यमानेऽपि । भवति भवतः, भवन्ति । भवसि भवथः भवथ । भवामि भवावः भवामः । भावकर्मविवक्षायां—

आत्मनेपदानि भावकर्मणोः ॥३०॥ धातोरात्मनेपदानि भवन्ति भावकर्मणोरर्थयोः । अकर्मकेभ्यो भावे, सकर्मकेभ्यः कर्मणि च ।

लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् ।
शयनक्रीडारुचिदीप्त्यर्था धातव एते कर्मविमुक्ताः ॥ १ ॥

क्रियार्थं कर्मपदेन युक्तं व्यपदिश्यते यत्र किमित्यपेक्षा ।
सकर्मकं तं सुधियो वदन्ति शेषस्ततो धातुरकर्मकः स्यात् ॥२॥

को भावः ?

> सत्तामात्रं भावलिङ्गं स्यादसम्पृक्तं तु कारकैः ।
> धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते ॥ १ ॥

तत्र प्रथमैकवचनमेव । किं कर्म ? क्रियाविषयं कर्म । तत्र त्रीणि वचनान्यपि । प्रथममध्यमोत्तमपुरुषानपि ।

भावकर्मणोर्यण् ॥ २१ ॥ धातोर्यण् भवति भावकर्मणोर्विहिते सार्वधातुके परे ।

नाम्यन्तयोर्धातुविकरणयोर्गुणः ॥ २२ ॥ नाम्यन्तयोर्धातुविकरणयोर्गुणो भवति । इति गुणे प्राप्ते—

न यग्गकारानुबन्धचेक्रीयितयोः ॥ २३ ॥ नाम्यन्तानां नाम्युपधानां च गुणो न भवति यगादावनुबन्धचेक्रीयितयोः परतः । भावे—भूयते । कर्मणि—

प्रादय उपसर्गाः क्रियायोगे ॥ २४ ॥ प्रादयः क्रियायोगे उपसर्गा भवन्ति । के ते प्रादयः ?

प्रपराऽपसमन्ववनिर्दुरभिव्यधिसूदतिनिप्रतिपर्यपयः ॥
उपमाङिति विंशतिरेष सखे उपसर्गगणः कथितः कविभिः ॥१॥

अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति । अनुभूयते ।

आते आथे इति च ॥२५॥ अकारात्परयोरातआथे इत्येतयो रादिरिर्भवति । अनुभूयेते । अनुभूयन्ते । अनुभूयसे अनुभूयेथे

स्वरादीनां वृद्धिरादेः ॥ ४८ ॥ स्वरादीनां धातूनां आदि स्वरस्य वृद्धिर्भवति ह्यस्तन्यादिषु परतः । ऐधत ऐधेतां ऐधन्त । ऐधथाः ऐधेथां ऐधध्वं । ऐध ऐधावहि ऐधामहि । भावे—ऐध्यत । कर्मणि-ऐध्यत ऐध्येतां । ऐध्यन्त ।। अपचत अपचतां अपचन अपचत अपचेतां अपचन्त । भावे—अपच्यत । कर्मणि—अपच्यत अपच्येतां अपच्यन्त ।

मास्मयोगे ह्यस्तनी च ॥ ४६ ॥ मास्मयोगे ह्यस्तन्यद्यतनी च भवति ।

नमामास्मयोगे ॥ ५० ॥ मायोगे मास्मयोगे च धातोरादावडागमो न भवति । मास्म भवत् मास्म भवतां मास्मभवन् ॥ मास्म एधत मास्म एधतां मास्म एधन्त । मास्म पचत् मास्म पचतां मास्म पचन ॥ मास्म पचत मास्म पचेतां मास्म पचन्त । भावे—मास्म भूयत । कर्मणि—मास्मानुभूयत मास्मानुभूयेतां मास्मानुभूयन्त ।

श्रु श्रवणे ।

श्रुवः शृ च ॥ ५१ ॥ श्रुवो धातोर्नु प्रत्ययो भवति सार्वधातुके परे शृ आदेशश्च । शृणोति शृणुतः शृण्वन्ति । अन्विकरणः कृत इति निर्देशात् द्विवचनबहुवचनयोश्च परस्मै सप्तम्यां च हि वचने च गुणो न भवति कचरच प्रदर्श्यते । शृणुयात् शृणुयातां शृणुयुः । शृणोतु । न याऋकारानुबन्धयोर्ज्ञापितमिति शृणुवन्त्यप्रत्ययत गुणनिषेधः । शृणुतात् शृणुतां शृण्वन्तु ।

नोश्च विकरणादसंयोगात् ॥ ५२ ॥ असंयोगात् पूर्वान्नु विकरणात् परस्य हेर्लोपो भवति । शृणु शृणुतात् शृणुतं शृणुत ।

। बहूयन्ते । दुनति समुद्री । नम्वति नन्वत—नन्वन्ति । नम्यते । वदि अभिवादनस्तुत्याः । वन्दते वन्देते वन्दन्ते । कर्माणि—वन्द्यते । त्रप त्रपाने । षञ्ज सङ्गे । ष्वञ्ज परिष्वङ्गे । रञ्ज रागे ।

दंशिषञ्जिष्वञ्जिरञ्जीनामनि ॥ ५७ ॥ एषामनि विकरणे परेऽनुषङ्गलोपो भवति । दशति । दशेत् । दशतु । अदशत् । दश्यते । सजति । सजेत् । सजतु । असजत् । सज्यते । परिष्वजते । रजति । रजेदित्यादि ।

रञ्जेरनि मृगरमणार्थे वा ॥ ५८ ॥ मृगरमणार्थे रञ्जे रनुषङ्गलोपो वा भवति अनि परे । रजति । अविवक्षितस्य—प्रयुक्ते । घाताख्य हेतौ इति इन भवति । रजयति । पक्षे रञ्जयति । ष्ठिवु ष्ठिवु निरसन । क्षमु क्षान्तौ । चमु छमु जमु झिमु अदने ।

ष्ठिवुक्लमाचामामनि ॥ ५९ ॥ ष्ठिवु क्लम आचम इत्येतेषा मुपधाया दीर्घो भवति परस्मैपदेऽनि परे । क्रियायोगे माङ्ग उपसर्ग-संज्ञा भवन्ति । निष्ठीवति निष्ठीवत निष्ठीवन्ति । क्लामति । भावे—क्लम्यते । आचामति । आचम्यते । आङीति किं ? चमति । विचमति । क्रमु पादविक्षेपे ।

क्रमः परस्मै ॥ ६० ॥ क्रमो दीर्घो भवति परस्मैपदे अनि परे । क्रामति । परस्मै इति किं ?

प्रोपाभ्यामारम्भे ॥ ६१ ॥ अनयोरुक्तं सञ्ज्ञ इत्यभिधान स्याथार्थो । प्राभाभ्यां पर क्रम आरम्भेऽर्थे आत्मनेपदी भवति । प्रक्रमते । उपक्रमते । प्रक्रम्यते उपक्रम्यते । पुष्कु पु म अव्यक्तगम्बुमार गतौ । इषु इच्छायां । यमु उपरमे ।

गमिष्यमां छः ॥६२॥ गम इषु यम एषामन्तस्य छो भवत्यनि परे । गच्छति । इच्छति । यच्छति । गम्यते । इष्यते । यम्यते । पा पाने ।

पः पिबः ॥६३॥ पाधातोः पिबादेशो भवत्यनि परे । पिबति । दामागायतिपिबतिस्थास्यतिजहातीनामीकारो व्यञ्जनादौ यकारादौ ईकारः पीयते । घ्रा गन्धोपादाने ।

घ्रो जिघ्रः ॥६४॥ घ्राधातोर्जिघ्रादेशो भवत्यनि परे । जिघ्रति । घ्रायते । ध्मा शब्दाग्निसंयोगयोः ।

ध्मो धमः ॥ ६५ ॥ ध्माधातोर्धमादेशो भवत्यनि परे । धमति । ध्मायते । स्था गतिनिवृत्तौ ।

स्थस्तिष्ठः ॥ ६६ ॥ स्थाधातोस्तिष्ठादेशो भवत्यनि परे । तिष्ठति । स्थीयते । म्ना अभ्यासे ।

म्नो मनः ॥६७॥ म्नाधातोर्मनादेशो भवत्यनि परे । मनति । म्नायते । दाण् दाने ।

दाणो यच्छः ॥६८॥ दाणधातोर्यच्छादेशो भवत्यनि परे । प्रयच्छति । प्रदीयते । दृशिर् प्रेक्षणे ।

दृशेः पश्यः ॥ ६९ ॥ दृशेर्धातोः पश्यादेशो भवत्यनि परे । पश्यति । दृश्यते । ऋ प्रापणे । सृ गतौ ।

अर्तेर्ऋच्छः ॥ ७० ॥ अर्तेर्ऋच्छादेशो भवत्यनि परे । ऋच्छति ।

गुणोऽर्तिसंयोगाद्योः ॥७१॥ अर्तेः संयोगादेश्च धातोर्गुणो भवति । यक्परोक्षयोः प्रत्यये परे । अर्यते ।

सर्त्तेर्धावः ॥७२॥ सर्त्तेर्धावादेशो भवत्यनि परे । धावति । पक्षाभिधानार्थं इति इकारलक्षणम् । स्त्रियते । ननु धातुगणपाठस्थत्वमपि धातुरस्ति । तथाभिधाने यथा स्यात् । तत्र क्रियामनुसरति । शदॢ शातन ।

शद शीय ॥ ७३ ॥ शदेः शीयादेशो भवत्यनि परे ।

शदेरनि ॥७४॥ शदेरनि परे आत्मनपदं भवति । शदि धातु रुधादिर्भवत्यनि परे । शीयते शीयेते शीयन्ते । कर्मणि—शाद्यते । पक्षे करिष्यत्यमन्य प्रयुक्ते शादयति । पदॢ विशरणगत्यवसादनेषु ।

सदेः सीद ॥७५॥ सदेः सीदादेशो भवत्यनि परे । सीदति । सीदतः सीदन्ति । इति भ्वादयः ॥

---

## अथ अदादिगणः ।

अद् प्सा भक्षणे । पूर्ववत् वर्तमानादीनि ।

अदादेर्लुग्विकरणस्य ॥ ७६ ॥ अदादेर्गणाद्विकरणस्य लुग्भवति ।

अघोषेष्वशिटां प्रथमः ॥७७॥ अघोषेषु प्रत्ययेषु परे अशिटां धुटां प्रथमो भवति । अत्ति अत्तः अदन्ति । अत्सि अत्थः अत्थ । अद्मि अद्वः अद्मः । शीङ् स्वप्ने ।

शीङः सार्वधातुके ॥ ७८ ॥ शीङो गुणो भवति सार्वधातुके परे । शेते शयाते ।

आत्मने दानकारात् ॥ ७९ ॥ अनकारादात्मनेपदे अन्तेन अकारस्य लोपो भवति ।

दीर्घादिभ्योऽश्च ॥ १२ ॥ अन्यथा यङ्लुगुत्तम च गुणा न भवति । आदीध्ये आदीध्यावहे आदीध्यामहे । आदीधीत आदीध्यातां आदीध्यत । आदीध्यत । अवीत अवयात अव्यते । वेवीत वेवीयातां वेवीरन् । वेवीतां वेव्यातां वेव्यतां । वेवीष्व वेव्याथां वेवीध्व । वेव्यै वेव्यावहै वेव्यामहै । अवेवीत अवेव्यातां अवेव्यत । अवेवीथा अवेव्याथां अवेवीध्व । अवेवि अवेवीवहि अवेवीमहि । वेव्यते । ईड स्तुतौ । ईट्टे ईडाते ईडते ।

ईडजनो स्त्वे च ॥ १२१ ॥ ईड्जना स्व च सार्वधातुके परे इड् भवति । ईडिषे ईडाथे ईडिध्वे । ईडे ईड्वहे ईड्महे । ईडीत ईडीयातां ईडीरन् । ईट्टां ईडातां ईडतां । ऐट् ऐडातां ऐडत । ईड्यते । इत्यादि । णु स्तुतौ ।

उतो वृद्धिर्लुकि हलादौ गुणिनि सार्वधातुके ॥१२२॥ धातोरुतो वृद्धिर्भवति व्यञ्जनादौ गुणिनि सार्वधातुके परे । वृद्धिग्रहणा दित्यादावनुक्तस्य वृद्धिर्न भवतीत्यर्थः ॥ नौति नुतः नुवन्ति । नौषि नुथः नुथ । नौमि नुवः नुमः । नुयात नुयातां नुयुः । नौतु नुतात् नुतां नुवन्तु । अनौत् अनुतां अनुवन् । नूयते । ष्णु । ष्टु स्तुतौ । स्तौति स्तवीति स्तुतः स्तुवन्ति । स्तुत स्तुवातं स्तुवत । स्तूयते । ऊर्णु ञ आच्छादने ।

ऊर्णोर्वेऽगु णः ॥ १२३ ॥ ऊर्णोतेर्गुणो भवति व्यञ्जनादौ गुणिनि सार्वधातुके परे । प्रोर्णौति । वृद्धिग्रहणाधिकयात् अस्य-स्तस्य पृथक्करणाद्वा प्रोर्णाति प्रोर्णुतः प्रोर्णुवन्ति । प्रोर्णोषि प्रोर्णौषि प्रोर्णुथः प्रोर्णुथ । प्रोर्णोमि प्रोर्णौमि प्रोर्णुवः प्रोर्णुमः । प्रोर्णुते

मिमीयाताम् मिमीरन् । मिमीथा मिमाथां मिमध्वं । मिमीष्व मिमाथां मिमीध्व । मिमे मिमावहे मिमामहे । बिभर्त्तु बिभृतां बिभ्रतु । बिभृतां बिभ्रातां बिभ्रतां । दधातु धत्तात् धत्तां दधतु । अभ्यस्ता नामनकारस्य इति लोप मात्रे । "लोपस्वरादेशयोः स्वरादेशो विधिर्बलवान्" इति स्वरादेशो भवति ।

दास्थोरभ्यासलोपश्च ॥ १६५ ॥ दासंज्ञकस्यास्तेश्च हौ परेऽन्तस्य एत्वं भवति अभ्यासलोपश्च । यथासंख्यं । धेहि धत्तात् धत्त धत्त । दधानि दधाव दधाम । धत्तां दधातां दधतां । अजुहोत् अजुहुतां ।

अन ठसिजभ्यस्तविदादिभ्योऽभ्युव ॥१६६॥ सिजभ्यस्त विदादिभ्यः परस्य अन उस् भवति । अजुहुः ।

अभ्यस्तानामुसि ॥ १६७ ॥ अभ्यस्तानां गुणो भवति उसि परे । अजुहवुः । अजुहोः अजुहुतं अजुहुत । अजुहवं अजुहुव अजुहुम । अजिहेत् अजिहितां अजिहयुः । अबिभः अबिभृतां अबिभरुः । अबिभः अबिभृतं अबिभृत । अबिभरं अबिभृव अबिभृम । अबिभृत अबिभ्रातां अबिभ्रत । अमिमीत अमिमातां अमिमत । अमिमीथाः अमिमाथां अमिमीध्वं । अमिमि अमिमीवहि अमिमीमहि । अदधात् अधत्तां ।

आकारस्योसि ॥१६८॥ आकारस्य लोपो भवति उसि परे । अदधुः । अधत्त अदधातां अदधत । मिमी मये । मिमेति मिमितः मिमीत ।

शासनमाशी ।

आशिषि च परस्मै ॥ ३५५ ॥ सर्वेषां धातूनां गुणो न भवति आशिषि च सर्वत्र परस्मैपदे परे । भूयात् भूयास्तां भूयासुः । भूयाः भूयास्तं भूयास्त । भूयासं भूयास्व भूयास्म । विनिमय वागर्ति- क्रिमाराध्नार्थे इस इति चुरादित्वादात्मनेपदं अर्पतेमर्षिषीष्ट । एधिषीष्ट एधिषीयास्तां एधिषीरन् । एधिषीष्ठा एधिषीयास्थां एधिषीध्वं । एधिषीय एधिषीवहि एधिषीमहि पच्यात् । पक्षीष्ट । नद्यात् । स्रंसिषीष्ट । ध्वंसिषीष्ट । ध्वंसिषीष्ट । स्वपिवचियजादीनामिति संप्रसारणम् । मान्यम्यानामिति दीर्घश्च । सुप्यात् । इज्यात् । व्येञ संवरणे । उभय- पदी । वीयात् वीयास्तां वायासुः । व्यासीष्ट व्यासीयास्तां व्यासीरन् । चिञ् चयने । चीयात् । चेषीष्ट । वञ् तन्तुसन्ताने । उभयपदी । ऊयात् ऊयास्तां ऊयासुः । वासीष्ट व सीयास्तां वासीरन् । ध्या वयो हानौ । पराङीयात् । ध्यय ताडने । विध्यात् । अयात् । अशुङ् व्याप्तौ । अशिषीष्ट अशिषीयास्तां अशिषीरन् । भ्रू ब्रू व्यक्तायां वाचि ।

ब्रुवो वचि ॥ ३५६ ॥ ब्रुवो वचिर्भवत्यसार्वधातुक- विषये । उच्यात् । वक्षीष्ट । इत्यादि । भम्यात् । शमिषीष्ट । हूयात् । हासीष्ट ।

आशिष्येकारः ॥ ३५७ ॥ दामादीनामकार सस्याशिष्यगुणे । दिधयात् । दिधासीष्ट दिधासीयास्तां दिधासीरन् । उभयपदी । देयात् । मेयात् । गेयात् । पेयात् । स्थेयास्तां । अवसेयास्तां । हेयात् । अगुण इति किं ? दासीष्ट दासीयास्तां ॥ हासीष्ट । दीव्यात् ।

अमाविष्यत असविष्यत अमोष्यत । अभाविष्यत अभष्यत । अपाविष्यत । अदविष्यत । अमार्जिष्यत अमार्क्ष्यत । अदर्शिष्यत अद्रक्ष्यत । इत्यादि । एवं सर्वमुन्नेय ।

---

## अथ सनादिप्रत्ययान्ता धातवः प्रदर्श्यन्ते ॥

गुप्तिज्किद्भ्यः सन् ॥२७२॥ गुप् तिज् कित् एभ्यः परः सन् भवति स्वार्थे ।

गुपादेश्च ॥२७३॥ गुपादेः सनि परे नेट् भवति ।

स्मिङ्पूङ्रञ्ज्वशूकॄगॄदृधृप्रच्छां सनि ॥ २७४ ॥ एषां धातूनां सनि परे इडागमो भवति । इति स्मिङादिनियमाभावात् ।

सनि चानिटि ॥२७५॥ नामिन उपधाया गुणो न भवति अनिटि सनि परे । द्विर्वचनमभ्यासकार्यं च कार्यं ।

ते धातवः ॥२७६॥ ते सनादिप्रत्ययान्ताः शब्दा धातुसंज्ञा भवन्ति ।

पूर्ववत्सनन्तात् ॥२७७॥ सनन्ताद्धातोः पूर्ववत्पदं भवति ॥ गुप् गोपनकुत्सनयोः । जुगुप्सते मां जुगुप्सेत जुगुप्सताम् । जुगुप्सेत । जुगुप्सतां अजुगुप्सत ।

अस्य च लोपः ॥२७८॥ धात्वकारस्य लोपो भवत्यनति प्रत्यये परे । अजुगुप्सिष्ट । जुगुप्साञ्चक्रे । जुगुप्सिता । जुगुप्सिषीष्ट । जुगुप्सिष्यते । अजुगुप्सिष्यत ॥ तिज निशाने क्षमायाञ्च । तितिक्षते ॥ कित निवासे रोगापनयने च । चिकित्सति । [illegible]

धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे ॥ ४०९ ॥
क्रियासमभिहारे वर्तमानाद्धातोर्व्यञ्जनादेरेकस्वरादपि यश्च चेक्रीयितसंज्ञको यो भवति क्रियासमभिहारः। शुभरुचादिवर्जितादेकस्वरात्परो यशब्दो भवति। क्रियासमभिहारः पौनःपुन्यं भृशार्थो वा। भृशं भवति पुनः पुनर्वा भवति।

गुणश्चेक्रीयिते ॥ ४१० ॥ अभ्यासस्य गुणो भवति चेक्रीयित प्रत्यये परे।

चेक्रीयितान्तात् ॥ ४११ ॥ चेक्रीयितान्ताद्धातोरात्मनेपदं भवति। बोभूयते। बोभूयेत। बोभूयतां। अबोभूयत। अस्य च इति लोपः। अबोभूयिष्ट। बोभूयाञ्चक्रे। बोभूयिता। बोभूयिषीष्ट। अबोभूयिष्ट। अबोभूयिष्यत।

दीर्घोऽनागमस्य ॥ ४१२ ॥ अनागमस्याभ्यासस्य दीर्घो भवति चेक्रीयित प्रत्यये परे। पापच्यते। पापच्येत। पापच्यतां। अपापच्यत।

यस्यानजि ॥ ४१३ ॥ व्यञ्जनात्परस्य यस्य लोपो भवति अनजि प्रत्यये परे। अपापचिष्ट।

गत्यर्थात्कौटिल्ये च ॥४१४॥ गत्यर्थाद्धातोः कौटिल्यार्थे चेक्रीयितसंज्ञको वा भवति।

अतोऽन्तोऽनुस्वारोऽनुनासिकान्तस्य ॥ ४१५ ॥ अनुनासिकान्तस्य धातोरभ्यासस्यान्ते अनुस्वारागमो भवति चेक्रीयिते परे। जङ्गम्यते। कुटिल इति किम् ? भृशं पुन पुनर्वा क्रामति।

**अभ्यस्तस्य गुणो यङि** ॥ ४२२ ॥

अभ्यस्य परस्मैपदिसम्बन्धी यो भवति ।

**येक्रीयिते च** ॥ ४२३ ॥ अर्तिसंयोगादेश्च गुणो भवति येक्रीयिते । अभ्यासस्य रेफस्य द्विरुक्तिर्भवति यक्रारेऽपि । अरार्यते । स्मृ ध्यै चिन्तायां । सास्मर्यते । अट गतौ । अटाट्यते । अश् भोजने । अशाश्यते । अशोशूयते । सूच पैशुन्ये सोसूच्यते । सूत्र अवमोचने । सोसूत्र्यते । मूत्र प्रस्रवणे । मोमूत्र्यते ।

**अयीयें** ॥ ४२४ ॥ शीङ अय् यो भवति यकारे परे । शाशय्यते । बाभण्यते । जोहूयते । जाहीयते । वेवीयते । मनीयते । जेगीयते । पपीयते । तद्वीयते । अपसेर्यायते । जहीयते । दर्दीयते । पोपूयते । नानद्यते । अभिनापूयते । अशाश्यते । बेभीयते । पाय पूजानिशामनयोः ।

**चाय किरयेक्रीयिते** ॥ ४२५ ॥ चाय किभवति यक्रीयिते परे । अस्यार्थं चायति चक्रीयते । अत्यर्थं तुदति तातुद्यते ।

**स्मृत ईदन्तस्यियेक्रीयितयिङ्गाविषु** । ४२६। ईदन्तस्य धिवायकीयितविभाविषु परत ईत्वम्भवति ॥ मेझीयते । मोमुच्यते रोरुध्यते । बाभुज्यते । योयुज्यते । तंतस्यते । ममस्यते । पेप्रीयते ।

**अपादीनां च** ॥ ४२७ ॥ अपादीनामभ्यासस्याभ्यासानुस्वारागमो भवति येक्रीयिते परे । अपशमदरंरामप्रपदा पठते जपादयः । जप मानसे सुर्तौ पुनः पुनर्वा गर्हितं जपति जञ्जप्यते । जभ जृम्भी गात्रविनामे । भृशं पुनः पुनर्वा जभति जञ्जभ्यते । दह भस्मीकरणे

दंदह्यते । जप जपने । जंजप्यते । भञ्जो आमर्दने । भृशं भनक्ति बम्भज्यते । पश इति सौत्रो धातुः । भृशं पशति । पम्पश्यते ।

चरफलोरुच्च परस्यास्य ॥ ४२८ ॥ चरफलोरभ्यासस्यानुस्वारागमः परस्यास्योत्त्वं भवति चेक्रीयिते परे । चरभ चरभ चरभ चर रिरि पिपि गत्यर्थाः । भृशं पुनः पुनर्वा गर्हितं चरति चञ्चूर्यते । पंफुल्यते । फलितम् ।

ऋमतो रीः ॥ ४२९ ॥ ऋमतो धातोरभ्यासस्यान्तो रीरागमो भवति चेक्रीयिते परे । ग्रहोऽ ज्याव्यान–गृदिभ्य इत्यादिना संप्रसारणम् । भृशं पुनः पुनर्वा गर्हितं गृह्णाति जरीगृह्यते । गुणो गमग्रनिषेध ।

नृतेरपेक्षापित ॥ ४३० ॥ नृतेर्नकारस्य णकारो न भवति चेक्रीयिते परे । नरीनृत्यते । परीनृत्यते । वानृतेन । एवं सर्वे नृतिलक्ष्य ।

इति चेक्रीयितप्रकरणम् ।

---

तस्य लुग्वा ॥ ४३१ ॥ तस्य चेक्रीयितस्य लुग्वा भवति । यस्य स्थाने यो विधीयते स स्थानेऽन्तर आदेशः । स्थानीव भवत्यादेशः । भवतिप्रत्यय चर्करीतलुगन्तस्यापि भवते । धातुप्रत्ययान्तस्यापि लुगन्तस्यापि धातोरेव भवतीति लोपः भवति ॥
चर्करीतं परस्मैपदमदादौ पठ्यते

चर्करीतस्य ॥ ४३२ ॥ चर्करीतस्यान्ते धातोर्वा इट् भवति व्यञ्जनादौ गुणिनि सार्वधातुके परे ।

गृहीपि अगृ हीपि अरीगृहीपि । अरिगर्धि अर्गर्धि अरीगर्धि । अरि
गृह अगृ ह अरीगृह । अरिगृह अगृ ह अरीगृह । अरिगृहीमि अगृ
हीमि अरीगृहीमि । अरिगर्धि अर्गर्धि अरीगर्धि । अरिगृह अगृ ह
अरीगृह । अरिगृम अगृ म अरीगृम ॥ अरिगृह्यात् अगृ ह्यात्
अरीगृह्यात् । अरीगृहितु अगृ हितु अरिगृहितु । अरिगर्तु अर्गेतु
अरीगर्तु । अरिगृहात् अगृ हात् अरीगृहात् । अरिगृहां अगृ हां अरी-
गृहां । अरिगृहतु अगृ हतु अरीगृहतु । अरिगृहि अगृ हि अरीगृहि ।
अरिगृहात अगृ हात अरीगृहात । अरिगृह अगृ ह अरीगृह । अगृ ह
अरिगृह अरीगृह । अरिगृहाणि अगृ हाणि अरीगृहाणि । अरिगृहाम
अगृ हाम अरीगृहाम । अरीगृहाम अगृ हाम अरिगृहाम । अजरीगृहीत्
अजगृ हीत् अजरिगृहीत् । अजरिगृहां अजगृ हां अजरीगृहां ।
अजरीगृह अजगृ ह अजरिगृह । अजरीगृहीः अजगृ ही
अजरिगृही ।

न रात् ॥४८ ॥ रेफस्वर संयोगान्तो लोपो न भवति । अ
अरिगर्द अजगर्द अजरीगर्द । अजरिगृहं अजगृ हं अजरीगृहं ।
अजरिगृह अजगृ ह अजरीगृह । अजरीगृहं अजगृ हं अजरिगृहं ।
अजगृ ह अजरिगृह अजरीगृह । अजगृ ह अजरीगृह अजरिगृह ।
इति यङ्लुगन्तप्रक्रिया ।

---

इन् कारितं धात्वर्थे ॥४४१॥ धातोः कारितसंज्ञक इन्भवति
धात्वर्थे ।

इनि लिङ्गस्यानेकाक्षरस्यान्त्यस्य स्वरादेर्लोपः ॥४४२॥

घनत्राबरस्य विङ्गस्य चान्त्यस्वरादेर्लोपो भवति इति पर इस्तिनाऽतिक्रमति अतिहस्तयति । इति गृह्णाति ।

न इलिकल्प्योः ॥४४३॥ इलिकल्प्योर् थिर्न भवति । हलयति । कल्पयति । अजहलम् । अचकल्पत् । हलयति । अचकल्पत् । वस्त्रं समाच्छादयति सवस्त्रयति । समवस्त्रत् । चर्मणा सन्नह्यति संवर्मयति । समवर्मत् । तत्करोति तदाचष्टे इति इत् । मुण्डं करोति मुण्डयति । अमुमुण्डत् । एवं मिश्रयति । अमिमिश्रत् । सूत्रमाचष्टे सूत्रयति । असुसूत्रत् ।

सत्यार्थवेदानामन्त आप् कारिते ॥४४४॥ सत्यार्थवेदानामन्त आप् भवति कारिते परे । सत्यमाचष्टे सत्यापयति । एवं अर्थापयति ।

न स्वराद्यो ॥४४५॥ स्वरादेर्लोपो न भवति इन चण् परे । आर्तिपत् । चकापयति । अचिकपत् ।

रमृम्द मृतो लघाव्यञ्जनादेः ॥४४६॥ व्यञ्जनादेरनेकाक्षरस्य लिङ्गस्य लघो ऋतो रावागमो भवति इनि परे । पृथु प्रत्थान । पृथु करोति प्रथयति । अपिप्रथत् । मृदु करोति म्रदयति । अमिम्रदत् । दृढं करोति द्रढयति । अदिद्रढत् । कृशं करोति क्रशयति । अचिक्रशत् । भृशं करोति भ्रशयति अबिभ्रशत् । परिवृढं करोति परिव्रढयति पर्यवव्रढत् । वृत्यति ।

पृथुं मृदुं दृढं चैव कृशं च भृशमेव च ।
परिपूर्वं वृढं चैव षडेतान्रविधौ स्मरेत् ॥१॥

पातोम् हेतौ ॥४४७॥ हेतुकर्तृव्यापारे वर्त्तमानाद्धातो

न कम्यमि चम ॥४६१। म्यों ह्रस्वो न भवति इनि परे।

कमेरिनिङ् कारितम् ॥ ४६२ ॥ कमेः कारितसंज्ञक इनिङ् भवति स्वार्थे । कमु कान्तौ । कामयते । अचिकमत् । अम द्रम मी मृ हम गतौ ॥ आमयति आमिमत् । चमु अदने । चामयति । अचीचमत् ।

शमोऽदर्शने ॥ ४६३ ॥ शमाऽदर्शनेऽर्थे ह्रस्वो भवति इनि परे । शमयति रोगम् । अशिशमत् । अदर्शन इति किं ? निशामयति रूपं । न्यशीशमत् ।

यमोऽपरिवेषणे ॥४६४। यमः अपरिवेषणेऽर्थे ह्रस्वो भवति इनि परे । यम उपरमे । नियमयति । अपरिवेषण इति किं आयामयति । आयीयमत् ।

स्खदिरवपरिभ्यां च ॥ ४६५ ॥ स्खदिरवपरिभ्यां च ह्रस्वो भवति इनि परे । स्खदिर् स्खदने । अवस्खदयति । अन्योपसर्गात् भवति । उपस्खादयति । अपचिस्खदत् । पर्यचिस्खदत् । उपाचिस्खदत् ।

फण गतौ । ४६६ ॥ फणो गत्यर्थे ह्रस्वो भवति इनि परे ॥ फणयति ॥ अगत्यर्थे इति किं ? फाणयति । अपीफणत् । इति इअता ॥

आत्मनेच्छायां यिन् ॥ ४६७ ॥ नाम्नो यिन्भवति आत्मन इच्छायाम् ।

यिन्यवर्णस्य ॥ ४६८ ॥ अवर्णस्य ईत्त्वं भवति यिनि परे ॥

वेदयते इत्यर्थे आयिप्रत्ययो भवति । सुखमात्मनो वेदयते सुखायते । एवं दुःखायते । तदनुभवतीत्यर्थः ।

शब्दादीन् करोति ॥ ४८१ ॥ शब्दादिभ्यो द्वितीयान्तेभ्यः करोत्यर्थे आयिप्रत्ययो भवति । शब्दं करोति शब्दायते । एवं वैरायते । कलहायते ।

नमस्तपोवरिवसश्च यिन् ॥ ४८२ ॥ एभ्यो यिन् भवति करोत्यर्थे । नमस्करोति नमस्यति देवान् । एवं तपस्यति शत्रून् । वरिवस्यति गुरून् ।

कण्ड्वादिभ्यो यन् ॥ ४८३ ॥ कण्ड्वादिभ्यो यन् भवति करोत्यर्थे ॥ कण्डूं करोति कण्डूयते । एवं तिरस्करोति तिरस्यति । इत्यादिप्रत्ययान्ताः ।

गुपूधूपविच्छिपणिपनिभ्य आयः ॥ ४८४ ॥ गुपूप्रभृतिभ्य आय प्रत्ययो भवति स्वार्थे । गोपायति । गोपायाञ्चकार ॥ गोपायिता । एवं धूपायति । विच्छायति । विछ विच्छ गतौ । पणायते । पणि व्यवहारे । पनायते । पन स्तुतौ च इत्यादयः ।

अभूततद्भावे कृभ्वस्तिषु विकाराच्च्विः ॥ ४८५ ॥ च्विप्रत्ययो नामभ्यो भवति अभूततद्भावेऽर्थे कृभ्वस्तिषु परेषु ।

* च्वावनव्ययस्य ईत्वम् ॥ ४८६ ॥ अवर्णस्य ईत्वं भवति च्वौ च परे । च्विसर्वापहारिप्रत्ययस्य लोपः । अशुक्लं शुक्लं करोति शुक्लीकरोति । अशुक्लः शुक्लः क्रियते शुक्लीक्रियते । अशुक्लः शुक्लो भवति शुक्लीभवति । अशुक्लः शुक्लः स्यात् शुक्लीस्यात् । अदीर्घो दीर्घः क्रियते दीर्घीक्रियते । अदीर्घं दीर्घं

करोति दीर्घीकरोति । अदीर्घो दीर्घो भवति दीर्घीभवति । अदीर्घो दीर्घः स्यात् दीर्घीस्यात् । एवं पुत्रीक्रियते पुत्रीकरोति पुत्रीभवति पुत्रीस्यात् । अवनिता वनिता क्रियते वनितीक्रियते । एवमग्नीक्रियते अग्नीकरोति अग्नीभवति अग्नीस्यात् । पटूक्रियते पटूकरोति पटूभवति पटूस्यात् ।

॥ प्लुत ईदन्तश्च्विपक्षीयितपितापिषु ॥ ४८७ ॥

प्लुतान्तस्य च्विपक्षीयितपितापिषु परत ईदन्ता भवति । मात्रीकरोति मात्रीक्रियते मात्रीभवति मात्रीस्यात् । पित्रीकरोति पित्रीक्रियते पित्रीभवति पित्रीस्यात् । इत्यादि । एवं सर्वमवगन्तव्यम् । इति च्विप्रत्ययान्ताः समाप्ताः । अथ पुषादयः ।

पुषादिद्युताद्लृदितामुञ्वातिभिर्विशास्तिस्यम परस्मै।४८८।

एभ्यश्च प्रत्ययः सर्वत्र भवति । पुष पुष्टौ । अपुषत् । शुष शोषणे । अशुषत् । दु न वैकल्ये । अदुषत् । स्लिष आलिङ्गने । अश्लिषत् । श्लिष्यति शब्दप्रकरणे । अश्लिषत् । क्षुध बुभुक्षायाम् । अक्षुधत् । शुध शौचे । अशुधत् । तिम संराद्धौ । अतिमत् । रुष हिंसायाम् । अरुषत् । तृप प्रीणने । अतृपत् । दृप हर्षमोहनयोः । अदृपत् । मुह वैचित्ये । अमुहत् । द्रुह जिघांसायाम् । अद्रुहत् । ष्णुह उद्गिरणे । अस्नुहत् । ष्णिह प्रीतौ । अस्निहत् । नश अदर्शने । अनशत् । शम दम उपशमे । अशमत् अदमत् । तमु काङ्क्षायाम् । अतमत् । श्रमु तपसि खेदे च । अश्रमत् । भ्रमु अनवस्थाने । अभ्रमत् । क्षमूष् सहने । अक्षमत् । क्लमु ग्लानौ । अक्लमत् । मदी हर्षे । अमदत् । असु क्षेपणे । आस्थत् । यसु प्रयत्ने । अयसत् । जसु मोक्षणे ।

बिभूलन । चरमासान् विद् श्रीडायौ । गिविवान् । गिवु उन्मुसन्वान ।
सिपिवान । ग्रिवु बिवु निरसने । तिष्ठिवान् । चिरिवाम् ।

गमहनविदविशदृशां वा ॥५०४॥ एषां वन्स भाजारच् वा भवति मयास८व उपधालोपः । जग्मिवान् । इडभाव ।

वमोम ॥५ ५॥ वमोम्य परपार्श्वतार्मो ना भवति । अगन्वान् जमिवान् । अघन्वान् । विविदिवान् । विविद्वान । विविशिवान् । विमिषान् । ददृशिवान् ।

दाश्वान्साह्वान्मीढ्वांश्च ॥ ५०६ ॥ एते क्वस्नुप्रत्ययान्ता निपात्यन्ते । दाम् दाने । दाश्वान् । षह मर्षणे । साह्वान् । मिह सेचने । मीढ्वान् ।

तव्यानीयौ ॥५ ७॥ धातोस्तव्यानीयौ भवत ।

ते कृत्याः ॥५ ८॥ ते तव्यादयः कृत्या भवन्ति ।

भावकर्मणोः कृत्यक्तखलर्थाः ॥ ५ ९ ॥ भावे कर्मणि च कृत्यक्तखलर्थाः भवितव्याः ॥ पूर्वस्यापवादोऽयं ॥ सुप्तनन भवितव्यं । भवनीयं । अनुक्ते कर्तरि तृतीया । एधितव्यं । एधनीयं । उक्ते कर्मणि प्रथमा । अभिभवितव्यः शत्रुः । अभिभवनीयः । कर्त व्यः कारणीयः कटः । दातव्यं दानीयं धनं ।

कृत्यपुटोऽन्यत्रापि च ॥५१०॥ कृत्या युट् च अन्यत्रापि भवन्ति । स्ना शौचे । स्नानीयं चूर्णं । दानीयो ब्राह्मणः । वृत् वर्तने । समावर्त्त नीयो गुरुः ॥

स्वराद्यः ॥५११॥ स्वरान्ताद्धातोर्यः प्रत्ययो भवति । चयं जयं नयं ।

वदीसुभ्यां क्यप् स्वरवत् ॥४१२॥ वदीभ्यां परं क्यप् स्वरवद्भवति । [illegible] ॥

शकिसहिपवर्गान्ताच्च ॥४१३॥ शकिसहिभ्यां पवर्गान्ताच्च यो भवति । शक्यं शाक्यं । शक्यम् । सह्यम् । जप्यम् । लभ्यम् ।

आस्खनोरिच ॥४१४॥ आकारान्ताद्धातोः खनेश्च यो भवति अनयोरन्त्य इकारागमो भवति । देयं पेयं [illegible] । खनेरि खनेयम् । अन्येषामागम । लेयं ।

यमिमदिगदां त्वनुपसर्गे ॥४१५॥ एषामनुपसर्गभावे यो भवति । यम्यं मद्यं गद्यं । अनुपसर्गे इति किं ? प्रयाम्य । समाद्य प्रगाद्य ।

चरेराङि चागुरौ ॥४१६॥ अनुपसर्गे आङि च चरेर्यो भवति अगुरौ । आचर्यो देशः । अनुपसर्गे इति किं ? अभिचार्यं । अगुराविति किं ? आचार्यो गुरुः ।

पण्यावद्यवर्या विक्रेयगर्ह्यानिरोधेषु ॥४१७॥ एतेष्वर्थेषु एते निपात्यन्ते यथासंख्यम् । पण्यमिति निपात्यते विक्रेयार्थे । अवद्यमिति निपात्यते गर्ह्यार्थे । वर्यमिति निपात्यते अनिरोधार्थे । पणु व्यवहारे स्तुतौ च । वद व्यक्तायां वाचि । वृञ् वरणे । पण्यं । अवद्यं । वर्यं ।

वह्यं करणे ॥४१८॥ वह्यमिति निपात्यते करणेऽर्थे । वह्यं शकटं वाह्यमन्यत् ।

अर्यः स्वामिवैश्ययोः ॥४१९॥ अर्य इति निपात्यते स्वामिनि वैश्ये चार्थे । अर्यतीति अर्यः स्वामी अर्यो वैश्यः ।

उपसर्या काल्याप्रजने ॥५२०॥ प्रजने प्राप्तकाले यत् उपसर्या इति निपात्यते । सृ गतौ । उपसर्या ऋतुमतीत्यर्थः ।

अजर्यं संगते ॥५२१॥ अजर्यमिति निपात्यते संगतेऽर्थे । न जीर्यत इत्यजर्यं आर्यसंगतं ।

नाम्नि वदः क्यप् च ॥५२२॥ नाम्नि उपपदे वद क्यप् भवति यच ।

सप्तम्युक्तमुपपदम् ॥५२३॥ धात्वधिकारे सप्तम्या निर्दिष्टमुपपदसंज्ञं भवति ।

तस्मिन्नाम यत् ॥५२४॥ तदुपपदं नाम धातोः प्राग्भवति ।

तस्य तेन समास ॥५२५॥ तस्य नामोपपदस्य तेन कृदन्तेन सह समासो भवति । [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] ।

भावे भुवः ॥५२६॥ नाम्नि उपपदे भुवो धातोः क्यप् भवति भावे । ब्रह्मभूयं गतः ब्रह्मत्वं गत इत्यर्थः ।

हनस्त च ॥५२७॥ नाम्नि उपपदे हन्तेः क्यप् भवति तस्य तकारादेशो भवति । ब्रह्महत्या । अश्वहत्या ।

इणस्तुशासुवृदृजुषां क्यप् ॥५२८॥ एभ्यः क्यप् भवति । पुनः क्यब्ग्रहणं अधिकारार्थमित्यर्थः । तेन नाम्नि भावे इति निवृत्त्यर्थं ।

धातोस्तोन्तः पानुबन्धे ॥५२९॥ ह्रस्वान्तस्य धातोस्तोऽन्तो भवति पानुबन्धे कृति परे । इत्य स्तुत्य । जुषी प्रीतिसेवनयोः ।

सन्निदृष्यसप कृतौ ॥ ५५२ ॥ सपूर्वाद्विनीतः कुप्यपूर्वो-स्थिततर्येस् भवति म च स्वरवत कृताभिधेये । सह्राय क्रतु । कुप्यपाय क्रतु ।

राजसूयम ॥ ५५३ ॥ क्रत्वाभिधेये राजसूय इति निपात्यते । राजा सोमम् राजा वा सूयते इति राजसूय ।

सामाय्यानाय्यौ हविर्निवासयोः ॥ ५५४ ॥ एतौ निपात्येते हविर्निवासयोरर्थयोः । सामाय्यं हविः विशिष्टमन्त्रनिकाय्यो निवास ।

परिचाय्योपचाय्यावग्नौ ॥ ५५५ ॥ एतावग्न्यर्थे निपात्येते । परिचाय्योऽग्निः । उपचाय्योऽग्नि ।

चित्याग्निचित्ये च ॥ ५५६ ॥ एतावग्न्यर्थे निपात्येते । चयनं चित्य । अग्नेश्चयनमग्निचित्या ।

अमावास्या वा । ५५७ । अमा-सहार्थे अमापूर्वाद्वसते र्ण्येय भवति कालाधिकरणे वा दीर्घत्वं निपात्यते । अमा सह वसतः चन्द्रार्कौ यस्यां तिथौ सा तिथि अमावस्या । अमावास्या । एतद्-यतनामुपपन्न तत्सर्वं निपातनात्सिद्ध ।

कुण्डपाय्यौ । ५५८ ॥ पाणौ कु पृथौ भवत ।

पुवुलामनाद्यन्ताः ॥ ५५९ ॥ पुवुलौ स्थाने यथासंख्यं अनअक अन्त इत्येते भवन्ति । भवतीति भावकः भविता । कारक कर्ता । नायक नेता । हारक हर्ता । कुमूपक । अस्य च लोप क्मू

वा स्वरे ॥५६६॥ गिरते रफस्य वा लकारो भवति स्वरे परे। गीर्ण। गलितः। गल्ल।

उपसर्गे धातो घ ॥५६७॥ उपसर्गे तु धात्वाकारान्ताद्धो भवति। सुखं। सुस्थ। प्रस्थ। प्रद्व। छो छेदन। पच्छ।

घेटदाविषप्यमाध्म्यः शः ॥५६८॥ उपसर्गे उपपदे एभ्यः शो भवति। स्वधय। उत्पश्य। उत्पिब। अभिघ्र। उद्धम।

साह्यसातिवेद्युदेजिधारिपारिलिम्पविदां त्वनुपसर्गे ॥५६९॥ एषामनुपसर्गे शो भवति। साहयतीति साहय। एव सातय। वेदय। एजृ कम्पने। उदेजय। चिती संज्ञाने। चेतय। धृङ् धारणे धारय। पार तीर कर्मसमाप्तौ। पारय। लिम्प। विन्द।

वा ज्वलादिदुनीभुवो णः ॥५७०॥ ज्वलादिभ्यो दुनोतेर्नयतेर्भवतेश्च अनुपसर्गे णो भवति वा पक्षे अच्। ज्वल दीप्तौ। ज्वाल ज्वाल। चल कम्पने। चल चाल। कसपर्यन्तो ज्वलादिः। टुदु उपतापे। दव दाव। नय नाय। भव भाव।

समाङ्भ्यां स्रुवः ॥५७१॥ समाङ्भ्यां स्रवतेर्णो भवति। संस्राव। आस्राव। समाङ्भ्यामिति किं? परिस्रव।

अवे ह्रवोः ॥५७२॥ अव-उपपदे हरते स्यतेश्च णो भवति। हृञ् हरणे। अवहार। षोऽन्तकर्मणि। अवसाय।

दिहिलिहिश्लिषिश्वसिव्यधिम्मिन्प्यपतीणहृग्राहां च ॥५७३। एषां णो भवति। दिह उपचये। देह। लिह आस्वादने। लेह। श्लिष

मधुशाम्य मधु शमाप । मद्रिमाद्र मद्रिमाद्र । तोमरमद्र ।
तोमरभाद्र ।

स्तम्बकर्णयो रमिजपो ॥६०॥ स्तम्बकर्णयोरुपपदयोर
मिजपिभ्यां अच् भवति । स्तम्बेरमो हस्ती । कर्णेजप पिशुन ।

शंपूर्वेभ्य सञ्ज्ञायाम् ॥६०१॥ शंपूर्वेभ्यो धातुभ्य सञ्ज्ञायां
अच् भवति । शं करोति इति शंकर । शंभव । शंवद ।

शीङोऽधिकरणे च ॥६०२॥ अधिकरणे च नाम्नि उपपदे
शीङ अच् भवति । खे शेते खशय । वनशय—

पार्श्व पृष्ठादौ करणे ॥६०३॥ पार्श्वपृष्ठादौ करणे उपपदे शीङ
अच् भवति । पार्श्वेन शेते पार्श्वशय पृष्ठशय कुम्भ ।

चरेष्ट ॥६०४॥ अधिकरणे नाम्नि उपपदे चरेष्ट भवति ।
कुरुषु चरति कुरुचर । व्यवमतीचर ।

पुरोऽग्रतोऽग्रेषु सर्ते ॥६०५॥ एषूपपदेषु सर्तेष्ट भवति ।
पुरस्सर । अग्रत सर अग्रेसर ।

पूर्वे कर्त्तरि ॥६०६॥ पूर्वशब्दे कर्त्तृषु पपदे सर्त्तेष्टो भवति ।
पूर्वसर पूर्वसरी ।

कृञ्। हेतुताच्छील्यानुलोम्येष्वशब्दश्लोककलहगाथावैर
चाटुसूत्रमन्त्रपदेषु ॥६०७॥ अशब्दादिषु कर्मसूपपदेषु हेतौ
ताच्छील्ये आनुलोम्ये कृञष्टो भवति । हेतौ यशस्करी विद्या ।
ताच्छील्ये श्राद्धकर । आनुलोम्य वचनकर । अशब्दादिष्विति किं

शब्दकार । श्लोककार । कलहकार । गाथाकार । वैरकार । चाटुकार । सूत्रकार । मन्त्रकार । पदकार ।

संख्याद्यन्तानन्तकारबहुबाह्वहर्दिवाविभानिशाप्रभाभास्करचित्रकर्तृ नान्दीकिंलिपिलिबिबलिभक्तिक्षेत्रजङ्घाधनुररुष्षु च ॥ ६८ ॥ एतादिषु कर्मसूपपदेषु कृञष्टो भवति । संख्यायां एककर द्विकर । अन्तिमानन्तस्य मकार । कारकर । बाहुकर । अन्तकर । अनन्तकर । कारकर । बहुकर । बाहुकर । अहस्कर । दिवाकर । विभाकर । निशाकर । प्रभाकर । भास्कर । चित्रकर । कर्तृकर । नान्दीकर । किंकर । लिपिकर । लिबिकर । बलिकर भक्तिकर । क्षेत्रकर । जङ्घाकर । धनुष्कर । अरुष्कर । दिवाकर । इत्यादि । चकारात् रजनीकर ।

भृतौ कर्मशब्दे ॥ ६९ ॥ कर्मशब्दे उपपदे टप्रत्ययो भवति भृत्यर्थे । कर्मकर भृत्य ।

स्तम्बशकृतो व्रीहिवत्सयो ॥ ६१० ॥ स्तम्बशकृतो रुपपदयो कृञ इर्भवति स्तम्बकरि व्रीहि । शकृत्करि व्रीहि शकृत्करि वत्स ।

हरतेर्दृतिनाथयो पशौ ॥ ६११ ॥ दृतिनाथयोरुपपदयो हरतेरिर्भवति पश्वर्थे । दृतिहरि । नाथहरि । पशु ।

फलेमलरज ग्रहे ॥ ६१२ ॥ एषूपपदेषु ग्रहेरिर्भवति । फलेग्रहि । मलग्रहि । रजोग्रहि ।

देवतात्पारापारे ॥६१३॥ देवतात्पारपारयोरुपपदयोरात्तेर्डिर्भवति ।
देवानाप्नोति देवापि । ममापि ।

आत्मोदरकुक्षिषु भृञः खिः ॥ ६१४ ॥ एषु कर्मसूपपदेषु भृञः खिर्भवति । नम्नु कयचित् इति नजाप ।

ह्रस्वारुषोर्मोऽन्तः ॥ ६१५ ॥ ह्रस्वान्तस्यानव्ययस्यारुषश्च पदस्य मकारोऽन्तो भवति खानुबन्धे कृति परे । आत्मानं बिभर्तीति आत्मम्भरिः । उदरम्भरिः । कुक्षिम्भरिः ।

एजेः खश् ॥ ६१६ । कर्मण्युपपदे एजतेर्णिजन्तात् खश् भवति । अङ्गमेजयः । जनमेजयतीति जनमेजयः ।

शुनीस्तनमुञ्जकूलास्यपुष्पेषु धेटः ॥ ६१७ ॥ एषु कर्मसूपपदेषु धेटः खश् भवति ।

दीर्घस्यापदस्यानव्ययस्य खानुबन्धे च ॥ ६१८ ॥ दीर्घान्तस्यानव्ययस्योपपदस्य ह्रस्वो भवति खानुबन्धे कृति परे । धेट् पाने । शुनीं धयतीति शुनिन्धयः । स्तनं धयतीति स्तनन्धयः । मुञ्जन्धयः । कूलन्धयः । आस्यन्धयः । पुष्पन्धयः । शुनिन्धयी ।

नाडीकरमुष्टिपाणिनासिकासु ध्मश्च ॥ ६१९ ॥ एषु कर्मसूपपदेषु धमतेर्धेटश्च खश् भवति । नाडिन्धमः । करन्धमः । करन्धयः । मुष्टिन्धमः । पाणिन्धयः । पाणिन्धमः । नासिकन्धमः । नासिकन्धयः ।

विध्वरुस्तिलेषु तुदः ॥ ६२० ॥ एषु कर्मसूपपदेषु तुदः खश् भवति । विधुन्तुदः ।

मयार्तिमेषपु कृञ ॥ ६ ॥ ण्यूपदेषु कृञ स्त्र भवति। मयकर । आर्तिकर । मेषकर ।

क्षेमप्रियमद्रे ण्वाण च ॥ ६३० ॥ ण्यूपपदेषु कृञ ख्य भवति अरच । क्षेमंकर क्षेमकार प्रियंकर प्रियकार । मद्रंकर मद्रकार ।

नाम्नितृवृस्त्यीधमत्तरिसहितपिदमिसहां संज्ञायाम् ॥ ६३१ ॥ नाम्न्युपपदे ख्य संज्ञायां ख्य भवति । रथन तरतीति रथंतर साम विश्वं बिभर्तीति विश्वम्भरा भू । पतिं वृणाते पतिंवरा कन्या । धन जयतीति धनञ्जय । वसु धारयतीति वसुन्धरा । शत्रुं तापयतीति शत्रुंतप । अरिं दमयतीति अरिन्दम । शत्रुं सहते इति शत्रुंसह ।

गमश्च ॥ ६३२ ॥ नाम्नि उपपदे गमश्च ख्य भवति संज्ञायां सुतंगम । हृदयंगमा वाच ।

उरोविहायसारुरविहो च । ६३३ ॥ उरोविहायसोरुरविहौ भवत गमश्च ख्य भवति संज्ञायां । उरसा गच्छतीति उरङ्गम । विहायसा गच्छतीति विहङ्गम ।

डोऽसंज्ञायामपि ॥ ६३४ ॥ नाम्नि उपपदे गमेर्डो भवत्य संज्ञायामपि । भुजाभ्यां गच्छतीति भुजग । तुरग । पन्नग । प्लवग । अध्वग । दूरग । पारग । सर्वग । सुग । दुर्ग । नग । खग । उरग । विहग ।

विहङ्गतुरङ्गभुजङ्गाश्च । ६३५ ॥ एते शब्दा निपात्यन्ते संज्ञायां । विहङ्ग । तुरङ्ग । भुजङ्ग ।

अनन्तोऽपि च ॥ ६३६ ॥ नाम्नि उपपदे गमेरन्यस्मादपि

डो भवति । वारि चरतीति वारूचः हंसः । गिरौ शेते गिरिशः । परानभिभवन्तीति भराटः । परिखन्यते परिखा ।

हन्तेः कर्मण्युपाशीर्गम्ये ॥६३७॥ कर्मण्युपपदे आशिषि गम्ये च वर्तमानाद्धन्तेर्डो भवति । शत्रुं वध्यात् शत्रुहः । क्लेशं हन्तीति क्लेशहः ।

अपात्क्लेशतमसोः ॥६३८॥ क्लेशतमसोरुपपदयोरपाद्धन्तेर्डो भवति क्लेशापहः । तमोपहः । दुःखापहः । ज्वरापहः । विषापहः । अन्यस्मादपि भवति वर्षापहः ।

कुमारशीर्षयोर्णिन् ॥६३९॥ कुमारशीर्षयोरुपपदयोर्हन्तेर्णिन् भवति । कुमारघाती । शीर्षघाती ।

टग्लक्षणे जायापत्योः ॥६४० ॥ जायापत्योरुपपदयोर्हन्तेष्टग् भवति लक्षणवत्कर्तरि । जायाघ्नो ब्राह्मणः । पतिघ्नी वृषली ।

अमनुष्यकर्तृकेऽपि च ॥६४१॥ अमनुष्यकर्तृकेऽपि च वर्तमानात् हन्तेरपि टग्भवति । जायाघ्नः तिलकः । पतिघ्नी पाणिरेखा । पित्तघ्नं घृतम् । वातघ्नं तैलं । श्लेष्माणं हन्तीति श्लेष्मघ्नं त्रिकटुकं । अमनुष्यात् हन्ता ।

हस्तिबाहुकपाटेषु शक्तौ ॥६४२॥ एषूपपदेषु हन्तेष्टग्भवति शक्तौ । हस्तिनं हन्तीति हस्तिघ्नः । एवं बाहुघ्नः । कपाटघ्नः ।

पाणिघताडघौ शिल्पिनि ॥६४३॥ एतौ शिल्पे निपात्येते । पाणिना हन्तीति पाणिघः । ताडघः ।

नग्नपलितप्रियान्धस्थूलसुभगाढ्येष्वभूततद्भावे कृञः ख्युन्

करणे ॥४४४॥ नग्नादिषूपपदेषु अभूततद्भावे कृञः ख्युट् भवति करणे । अनग्नो नग्नः क्रियते अनेन नग्नङ्करणं द्यूतं । एवं पलितङ्करणस्तैलं । प्रियङ्करणं शीलं । अन्धङ्करणः शोकः । स्थूलङ्करणं दधि । सुभगङ्करणं रूपं । आढ्यङ्करणं वित्तं ।

भुवः खिष्णुखुकञौ कर्तरि ॥४४५॥ नग्नादिषूपपदेषु अभूततद्भावे भुवः खिष्णुखुकञौ भवतः कर्तरि । अनग्नो नग्नो भवति नग्नम्भविष्णुः । नग्नम्भावुकः । पलितम्भविष्णुः । पलितम्भावुकः । प्रियम्भविष्णुः । प्रियम्भावुकः । अन्धम्भविष्णुः । अन्धम्भावुकः । स्थूलम्भविष्णुः । स्थूलम्भावुकः ।

कर्मणि भजो विण् ॥४४६। कर्मणि भजो विण् भवति । वर्णोपाऽपृक्तस्य इति वर्णोपो भवति ॥ अर्द्धभाक् । पादभाक् ।

सह छन्दसि ॥४४७॥ छन्दसि भाषायां सहो विण् भवति । तुरासाट् ।

सहेर्षो ढः ॥४४८॥ सहेः सकारस्य षत्वं भवति हकारस्य ढकारो भवति येन । तुराषाड् तुराषाडौ तुराषाडः ।

वहश्च ॥४४९॥ नाम्नि उपपदे वहश्च विण् भवति । प्रष्ठ-वाद् प्रष्ठौही ।

अनसि डश्च ॥४५० ॥ अनस्युपपदे वहश्च विण् भवति । अनसश्च डो भवति । अनड्वान् । अनडुही ।

दुहः को घश्च ॥४५१॥ दुहः को भवति अन्तस्य घादेशः । [illegible]दुघा । कामदुघा ।

अदसोमुः ॥ ६७४ ॥ दृगादिषु अदस् अमूर्भवति । अमुमिव पश्यतीति अमूदृशः । अमूदृशः अमूदृक् ।

दृग्दृशदृक्षेषु समानस्य सः ॥ ६७५ ॥ दृगादिषु परेषु समानस्य सभावो भवति । समानमिव पश्यतीति सदृशः । सदृक्षः । सदृक् ।

नाम्न्यजातौ णिनिस्ताच्छील्ये ॥ ६७६ ॥ अजातौ नाम्नि उपपदे धातोर्णिनिर्भवति ताच्छील्यार्थे तच्छब्देन धात्वर्थो गृह्यते । उष्णं भोक्तुं शीलमस्य उष्णभोजी । धर्ममवभासितुं शीलमस्य धर्मं अवभासयत इति एवं शीलः धर्मावभासी । प्रियवादी । प्रियवादिनी ।

कर्त्र्युपमाने ॥ ६७७ ॥ कर्तृवाचिनि उपमाने उपपदे धातोर्णिनिर्भवति । उष्ट्र इव क्रोशतीति उष्ट्रक्रोशी । ध्वाङ्क्षरावी । हंसगामिनी ।

व्रताभीक्ष्ण्ययोश्च ॥ ६७८ ॥ व्रताभीक्ष्ण्ययोरर्थयोर्धातोर्णिनि र्भवति व्रतं शास्त्रविहितो नियमः । आमोदयं पीनं पुरुषः । अश्राद्धभोजी । स्थण्डिलशायी । क्षीरपायिण उशीनराः । सौवीरपायिणो बाह्लीकाः ।

मनः पुंवच्चाद्य ॥ ६७९ ॥ कर्मण्युपपदे मन्यतेर्णिनिर्भवति उपपदस्य पुंवद्भवति यथासम्भवं । पटुमानी । पट्वीमात्मानं मन्यते पटुमानिनी ।

खश्चात्मने ॥ ६८० ॥ कर्मण्युपपदे आत्मार्थे मन्यतेर्णिनि र्भवति खश्च प्रत्ययः पुंवच्च । विदुषीमिव आत्मानं मन्यते विद्वन्मा

निन्दी । पटुमिवात्मानं मन्यते पटुमन्य ।

करणेऽतीते यज ॥ ६८१ ॥ करणे उपपदे यजेर्णिन् भवति अतीतेऽर्थे । अग्निष्टोमेन इष्टवान् अग्निष्टोमयाजी । वाजपेययाजी ।

कर्मणि हन इत्सायाम् ॥ ६८२ ॥ कर्मण्युपपदे हन्तेर्णिनिर्भवति अतीते काले वर्तमानात् कुत्सायां । पितृघाती । मातुलघाती ।

क्विप् ब्रह्मभ्रूणवृत्रेषु ॥ ६८३ ॥ ब्रह्मादिषूपपदेष्वतीते हन्तेः क्विप् भवति । ब्रह्माणं हन्ति स्म ब्रह्महा । भ्रूणहा । वृत्रहा ।

कृञः सुपुण्यपापकर्ममन्त्रपदेषु ॥ ६८४ ॥ एषूपपदेषु कृञः क्विप् भवति अतीते । सुष्ठु करोतिस्म सुकृत् । पुण्यकृत् । पापकृत् । कर्मकृत् । मन्त्रकृत् । पदकृत् ।

सोमे सुञः ॥ ६८५ ॥ सोमे उपपदे सुञः क्विप् भवति अतीते । सोमं सुनोतिस्म सोमसुत् ।

चेरग्नौ ॥ ६८६ ॥ अग्नावुपपदे चिनोतेः क्विप् भवति । अतीते अग्निं चिनोतिस्म अग्निचित् ।

। विक्रिय इन् कुत्सायाम् ॥ ६८७ ॥ विक्रेयादुपपदात् क्रीणातेः कुत्सायां इन् भवति । सोमं विक्रीणीतेस्म सोमविक्रयी । कुत्सायां किम् धान्यविक्रयी ।

दृशेः क्वनिप् ॥ ६८८ ॥ कर्मण्युपपदे दृशः क्वनिप् भवति अतीते । मेरुं दृष्टवान् मेरुदृश्वा ।

सहराज्ञोर्युधः ॥ ६८९ ॥ सहराजोपपदयोर्युधः क्वनिप् भवति भूते । युधं सम्प्रहारं सह युद्धवान् सहयुध्वा । राजानं युद्धवान् राजयुध्वा ।

कृञश्च ॥ ६९० ॥ सहराजयोरुपपदयोः कृञः क्वनिप् भवति भूते । सहकृत्वा । राजकृत्वा ।

सप्तम्यां जनेर्डः ॥ ६९१ ॥ सप्तम्यन्ते उपपदे जनेर्डो भवति भूते । जले जातं जलजं । सरसिजं । संस्कारात् जातं संस्कारजं । बुद्धिजं । पङ्के पङ्केजं । नीरजं ।

अन्यत्रापि च ॥ ६९२ ॥ अन्यस्मिन्नप्युपपदे जनेर्डो भवति भूते । न जातं अजं । ब्राह्मणात् जातो द्विजः । अभिजः । अग्रजः । अनुजः । पुमांसमनुजातः ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ॥
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥ १ ॥
वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः ॥
षोडशादौ विकारः स्याद्वर्णनाशः पृषोदरे ॥ २ ॥
वर्णविकारनाशाभ्यां धातोरतिशयेन यः ।
योगः स उच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ ३ ॥

महीं रौतीति मयूरः । भ्रमन् रौतीति भ्रमरः । स्यात् समासान्तस्य अनुमादिति स्यात् पुंसोऽनुजस्य लोप इति सूत्रेण अन्तस्य लोपः । संयोगान्तस्य लोप इति सलोपः । पुमनुजः । स्त्र्यनुजः ।

निष्ठा ॥ ६९३ ॥ धातोर्निष्ठासंज्ञको भवति भूते क्तः ।

क्तक्तवतू निष्ठा ॥ ६९४ ॥ क्तक्तवतू निष्ठासंज्ञौ भवतः ।

न भूपुनर्वपूशां मनुबन्धे ॥ ६६४ ॥ मध्यस्वरूपोऽन्तस्य भूधूभूयस्मस्य च नड् भवति कानुबन्धेऽसार्वधातुके । भित मितवान् । पुतः पुतवान् । भूतः भूतवान् । पूतः पूतवान् ।

रात्मिद्युतो नोऽपमूर्छिमादिस्याध्माभ्यः ॥ ६६६ ॥ रेफस्वरस्य निष्ठातकारस्य नकारो भवति नतु मूर्छिमदिख्या-ध्याभ्य । शृ हिंसायां । शीर्णः शीर्णवान् । कीर्णः कीर्णवान् । गीर्णः गीर्णवान् । प्रतिषेधः किम् ? पृ पूर्णः पूर्णवान् । मूर्च्छा मोहसमु-च्छ्राययो । मूर्तः मूर्तवान् । मत्तः । म डीङ्शीङ्नुबन्धवेटामपति-निष्ठयोरिति इट्प्रतिषेधः । स्यानः । ध्यातः ।

निष्ठठीनः ॥६६७॥ निष्ठायामिटि परे इत्ये लोपो भवति । चोर्यं तेस्म चोरितः चोरितवान् । कारितः कारितवान् ॥ क्षुधिवसो रित्येति वर्तते ।

निष्ठायाश्च ॥ ६६७ ॥ क्षुधिवसोर्निष्ठायां वा मट् भवति ।

क्षुमो निमोहने ॥ ६६८ ॥ विमोहनेऽर्थे क्षुभो निष्ठायां वा नेट् भवति । क्षुभितः क्षुभितवान् । वसितः वसितवान् । क्षुभ गार्ध्ये क्षुभितः क्षुभितवान् । क्षुब्धः क्षुब्धवान् ।

पूङ्क्लिशोर्वा ॥ ७० ॥ पूङः क्लिशश्च निष्ठायामिट् वा भवति । पूतः पूतवान् । पवितः पवितवान् । क्लिश् विबाधने । क्लिष्टः क्लिष्टवान् । क्लिशितः क्लिशितवान् ।

न डीङ्शीङ्नुबन्धवेटामपतिनिष्ठयोः ॥ ७१ ॥ डीङ् शीङोरुकारानुबन्धस्य च वेटस्य निष्ठायां नेट् भवति अपतिनि-ष्ठयो ।

म्यनुष चमतिवुद्धिपूजार्थेभ्य क्त ॥ ७२७॥ मतिरिच्छा बुद्धिर्ज्ञान पूजा सत्कार । म्यनुष चमतिबुद्धिपूजार्थेभ्य क्तो भवति वर्तमानकाल भाव कर्मणि कर्त्तरि च यथासम्भवं । मिमिदा स्नेहने । मिन्न । स्विन्न स्विन्नवत् । राज्ञां मतः । सम्मानित । बुद्धा राज्ञां बुधा । राज्ञां ज्ञात । पूज पूजायां । राज्ञां पूजित सन्मानित ।

नपु सके भावे क्त ॥ ७२८ ॥ भावे क्त भवति नपुंसके । हसितमत्र । सुप्तमिनं । कुमारस्य शयितं । आस उपवेशन । आसितं पुत्रस्य एधितं ।

युट् च ॥ ७२९ ॥ भावे नपुसके युट् च भवति । भवनं । पचनं । भवनं । असन । वपन । तोडन । शयनं । करणं । मननं । इत्यादि सर्वधातुभ्यश्च ।

तच्छीलतद्धर्मतत्साधुकारिषु कर्त्तृषु ॥ ७३० ॥ आ क्व काऽर्थे. क्रियमधिकारार्थ इत्यर्थः । तच्छीलादिषु कर्तृषु अत पर वक्ष्यमाणाः प्रत्ययाः ।

तृन् ॥ ७३१ ॥ तच्छीलादिषु धातोस्तृन भवति भविता जनापवादान् मूर्ख । मुण्डयिता आविष्टायितामा । आधीर ज्ञान ।

भ्राज्यलङ्कृञ्भूयुर्वि्तरुचिवृत्तिवृधिसहिचरिप्रजनापत्रपनामिष्णुच्७३२

एभ्य इष्णुच् भवति तच्छीलादिषु । भ्राजिष्णु । अलङ्करिष्णु । भविष्णु । सहिष्णु । रोचिष्णु । वर्तिष्णुः वर्धिष्णु । चरिष्णु । प्रजनिष्णु । अपूप् लज्जायां । अपत्रपिष्णु । इत्यादि । धारयिष्णु ।

मदिपचिपतामुदि ॥ ७३३ ॥ उपसर्गेभ्य एभ्य इष्णुच

सेट् गुणी भवति वा । मिमृषा पिपासायां । मर्षित्वा मृषित्वा । मृष सहने च । मर्षित्वा मृषित्वा । कृश विलेखने । कर्शित्वा कृशित्वा । वञ्च प्रलम्भने । वञ्चित्वा । लुञ्चु अपनयने । लुञ्चित्वा । ऋत इति सौत्रो धातुः । अर्तित्वा ऋतित्वा ।

थफान्तानां चानुषङ्गिणां ॥ ७८७ ॥ थान्तानां फान्तानां चानुषङ्गिणां क्त्वा सेट् गुणीभवति वा । ग्रन्थ ग्रन्थ सन्दर्भे । ग्रन्थित्वा ग्रथित्वा । श्रन्थित्वा श्रथित्वा । गुफ गुम्फ इत्यादि गुम्फित्वा । गुफित्वा ।

जान्तनशामनिटां ॥ ७८८ ॥ जान्तनशामनिटां चानुषङ्गिणां क्त्वा सेट् गुणी भवति वा । षञ्ज सङ्गे । सङ्क्त्वा सक्त्वा । रञ्ज रागे । रक्त्वा । रंक्त्वा । मस्जो मार्जने । मक्त्वा । णश परिणाशे । नंष्ट्वा नष्ट्वा ।

मस्जिनशोधुंटि ॥ ७८९ । मस्जिनशोः स्वरात्परो नकारागमो भवति धुटि परे । टुमस्जो शुद्धौ । मङ्क्त्वा मक्त्वा । णश अदर्शने । नंष्ट्वा नष्ट्वा । स्वादिव्यंजनेप इट् वा भवति नशित्वा ।

इङ्हातेर्हिस्य ॥७९०॥ ह्यतेरिट् भवति । क्त्वा प्रत्यये । हित्वा ।

समासे भाविन्यनञः क्त्वो यप् ॥ ७९१ ॥ अनञ क्त्वान्तं समासे भाविनि क्त्वाप्रत्ययस्य यबादेशो भवति अभिभूय । अभिभवनं पूर्वं पश्चात्सिद्धिरिति । अभिभूय सिद्ध । विजित्य । प्रस्तुत्य अभीत्य उपेत्य ।

संपदादिभ्यश्च क्विप् ॥८०५॥ संपदादिभ्यः क्विप् भवति भावे स्त्रियां । पद गतौ संपद्यते संपदनं वा संपत् । षद्लृ विशरण-गत्यवसादनेषु ॥ संसदनं संसत् । परिपदनं परिपत् ।

व्रजयजोः क्यप् ॥८०६॥ आभ्यां भावे स्त्रियां क्यप् भवति । व्रज् गतौ व्रजनं व्रज्या इज्या ।

श च ॥८०७॥ कृञो भावे शः भवति क्यप् किरच स्त्रियां । क्रियते करणं वा यथाविशेषेर्न इति इकारागमः क्रिया भावोऽस्तोन्त पाठुमन्ये कृत्या इति ।

शंसिप्रत्ययात् ॥८०८॥ शंसेः प्रत्ययान्ताद्धातोरपि अप्रत्ययो भवति स्त्रियां । शंसु स्तुतौ प्रशंसनं प्रशस्यते इति वा प्रशंसा प्रत्ययान्तात् कुसूयणं कुसूयस्व इति वा कुसूया । चक्ष परिभाषणे चिचक्षया चिचक्षा । बिभित्सनं बिभित्सा । पिपठिषणं पिपठिषा । पिपासनं पिपासा । लोलूयनं लोलूया । कण्डूञ् गात्रविघर्षणे । स्वार्थे यक् । कण्डूयादेर्यक् कण्डूयनं कण्डूया ।

गुरोश्च निष्ठायां सेटः ॥८०९॥ निष्ठायां सेटः गुरुमतो धातो रप्रत्ययो भवति स्त्रियां । ईह चेष्टायां ईहनं ईहस्व इति वा ईहा । ईक्ष दर्शने ईक्षणं ईक्षा । एवं सर्वमवगन्तव्यम् । [इति]

माघशुक्लत्रितिथिर्न वादिपर्वतवासिना ॥
कृताया रूपमालायां कृदन्त पर्व पूर्वत ॥ १ ॥
मन्दबुद्धिप्रबोधार्थं माघसेनमुनीश्वरः ॥
कातन्त्ररूपमालाख्यां वृत्तिं व्यरचयत्सुधीः ॥ २ ॥
वीरोऽप्यप्रकारिणा समभवत् सौजन्यमात्माधिके
सन्मार्गं श्रुतमाघसेनमुनिपे मैत्रिपदेवे मयि ॥ ३ ॥

सिद्धान्तोऽयममापि यः स्वपिरवागर्वोद्धतः केवलम्
संस्पर्द्धेत वदीयगर्वकुहरे वक्ष्यामहे मद्वचः ॥ ४ ॥

---

इति कातन्त्रस्य रूपमाला प्रक्रिया समाप्ता ।

---

अत्र उपयुक्ताः श्लोकाः ।

आरम्भात्तं श्रीमदावार्हत्प्रमोक्षश्रीपदे सुधि ।
यत्प्रसादात् व्याकरणं भवेत् सर्वार्थसाधकं ॥ १ ॥
अकारादिहसीमानं वर्णाम्नायं वितन्वता ।
अयमेवादरणाय न स्वनामास्यावमादित ॥ २ ॥

तथाहि,

अ एव स्वार्थिकेनाऽऽद्य शाद्यम् इह अयमात्मिमा
तकारादिर्जायपि पाठोऽकारादिहसीमकः ॥ ३ ॥
यः स्मरे कम वर्णेषु रादिपः स तु हान्वितः ।
अकारादिहसीमाख्ये पाठेऽर्हं मंगलं पदं ॥ ४ ॥
यथार्हत्पदसंदर्भात् वर्णाम्नायः प्रतिष्ठितः ।
तस्मै कौमारशब्दानुशासनाय नमोनमः ॥ ५ ॥
आद्म्या कुमार्या प्रथमं सारस्वत्याप्यधिष्ठितं ।
अर्हं पदं संस्मरंस्या तत् कौमारमधीयते ॥ ६ ॥
कुमार्या अपि भारत्या अनुज्ञातेऽप्ययं क्रमः ।
अकारादिहपर्यन्तस्ततः कौमारमित्यदः ॥ ७ ॥

॥ समाप्त ॥